श्रीः

# योगि श्री नागलिङ्ग शिवाराध्य कृतौ

## ब्रह्मपथे



शिवाद्वैत पर्यङ्किकाख्यव्याख्यासनाथे

[illegible] सव्यभागे वेदपथे

[illegible]द्वैत पथप्रतिषेधः ।२।

---

१९३६।

Registered ] [ मूल्यम् रु १—०—०



तेनालि शारदा मुद्राक्षरशालायां मुद्रितः ।

## वेदपथे

### केवलाद्वैत पथप्रतिषेधः

अव ॥ ननु, सविशेष शिवाद्वैत स्त्वयाऽङ्गीकृतस्सनयुज्यते । केवला द्वैतस्य श्रुतियुक्त्यनुभवसिद्धत्वेन तद्विरुद्धत्वादित्या शंक्य तस्य श्रुत्यादि विरुद्धता न्निरूपयिष्यन्नादा वनुभवविरोधन्निरूपयति ॥ यथा ।

मू ॥ आत्मैको निर्विशेषः किल समभिमत स्तत्र निर्मूलभावे ।
मायाविद्ये स्वयम्वै भवत इतिपर न्तेकिलाभासमात्रौ ।
जीवेशौ निर्मिमातेस्फुटमिति गदित्त स्सर्वसम्भाव्यशून्यो ।
वाद स्सम् श्रूयमाणो जगति मतिमतः कस्य हासन्नपुष्येत् ॥

आत्मेति ॥ इयमिह परेषाम्प्रक्रिया । यद्यपिअस्तिकिंचन्निरस्त समस्तविशेष मेकमेव वस्तु । तथापि व्यवहारसिद्धये काचन मायाऽङ्गीक्रियते । साच शुद्धसत्वमलिनसत्व भेदेन द्विविधासती जीवेशा वाभासतः करोति । ततश्चोपपद्यते सकलोपिव्यवहारः । तथाचश्रुतिः । मायाचा विद्याच स्वयमेवभवति । इति ॥ उक्तञ्चाभियुक्तैः । चिदानन्दमय ब्रह्म प्रतिबिम्ब समन्विता । तमोरजस्सत्वगुणाप्रकृतिर्द्विविधाचसा । सत्वशुद्ध्य विशुद्धिभ्याम्माया विद्येचतेमते । मायाबिम्बो वशीकृत्यताम्स्यात्सर्वज्ञ ईश्वरः । अविद्यावशगस्त्वन्य स्तद्वैचित्र्या दनेकधा । इति ॥

एवञ्च । सर्वस्यापि व्यवहारस्य मायिकत्वाद्ब्रह्मणोऽद्वितीयत्वस्य नकापिक्षतिरिति ॥

 

अयमापातरमणीयः परेषाम्समयो न विमर्शनांक्षमते ॥ यंतश्चा दौ न नर्विशेषम्वस्तु सम्भवति । प्रमाणाभावात् । सविशेषविषयतया सर्वप्रमाणानाम् ॥

ततश्च या परैरभ्युपगम्यते माया सापि न सम्भवति । सदसद निर्वचनीयायास्तस्या लोकवे दाप्रसिद्धत्वात् । तादृ गनिर्वचनीयपदार्थस्य कुत्रा प्यास्तिकतन्त्रेऽनभ्युपगमाच्च । अथ तस्या द्वैविध्यमपि नसम्भवति । कारणानुपलम्भात् ॥ स्वरूपमपि नसिध्यति यामा सामाया । नविद्यत इत्य विद्येतिच परै रेव तत्सत्तानभ्युपगमाच्च ॥ आतश्चनिर्मूलभाव इति सुसङ्गतम् । नच तत्र सत्वभेदः कारणमस्तीतिवाच्यम् । सतिसत्त्वभेदे मायाभेदः । मायाभेदेच सत्वभेद इत्यात्माश्रयप्रसङ्गात् । अथ तस्या जीवेशकर्त्तृत्वमपि न सम्भवति । बिम्बप्रतिबिम्ब भावस्यवा ? अवच्छेद्याव च्छेदक भावस्यवा ? ग्राह्यग्राहकयोरुभयोरपि सतोरेव सम्भवेन अन्यतर मिथ्यात्वेतदयोगात् । नामरूपादि सर्वविशेष रहित म्वस्तु मिथ्याभूताया म्मायायाम्प्रतिबिम्बतीतिवा- अनिर्वचनीयामाया तादृशम्वस्तु परिच्छिनत्ती तिवा - साहसिकस्यवक्तुम् शक्यत्वेपि निरूपयितु मशक्यत्वात् ॥ ततो प्याभासमात्रौ जीवेशौविचित्रसर्गंकुरुत इतिचाभासमात्र मेवेति नतद्विमर्श मर्हति ॥ एव मसम्भाव्यमान सर्वपदार्थसाधतया परेषाम्पक्षस्सर्वस्यापिहा सम्पुष्णात्येवेतिस्फुटम् ॥

आतश्च—सू ॥ आभासाएवेति निर्विशेषत्ववादेयुक्तयो भगवता सूत्रकारेणभासिताः । अथाप्यत्राभासपदमुस्वाभिमतचिदाभास, परतया विवरण मप्यधिकारिणोऽवस्तुत्वसाधकतयो, हासमेव, पुष्णातीतिस्पष्ट ॥

अव ॥ अथ परपक्षे युक्तिविरोध न्निरूपयति । यथा ।

मू ॥ मायाऽविद्ये किलाद्ये दृढ मिह भव दालम्बितेऽभीष्टसिध्यै
आलम्बेतेऽस्तिनास्त्यो रनधिगतपदे तेतयो रन्तराळे ।
तत्राऽनिर्वाच्य भावादपि समभिमतानादिभावादपि स्या
त्क्लिष्टोऽध्वैव प्रदृष्टो ह्यणुरपि भवतः किन्तुनेष्टः प्रपुष्टः ॥

व्या ॥ परैस्तावत् व्यवहारे जीवेशादिभेदमुपपादयितुम् ये माया विद्ये समालम्बिते । तेसत्या वुताऽसत्यावित्याशङ्कायाम् । सदसद्विलक्षण तया अनिर्वचनीये इत्यभ्युपगम्येते ॥ एवंच । अस्तिनास्त्योरनधिगतपदे सत्यौ तयोरन्तराळे त्रैशङ्कव इव स्वर्गे समालम्बमाने ते परेषामभीष्टसाधिके भवत इति महच्चित्रम् ॥ अथयत्तयो स्साधनायाऽनिर्वचनीयता मनादि ताञ्चसिसाधयिषन्ति। ततोपि तदीयाध्वनः क्लिष्टतैवदरीदृश्यते । नाल्पोपीष्टः प्रपुष्यते । अनिर्वचनीयतावादस्या ऽ निर्वचनीयत्वाद्ब्राह्ममतैराहतत्वाच्च ॥ अनादित्वकल्पनाया अन्धपरम्परात्वेन परै रेवाभ्युपगतत्वाच्च ॥

ननु—श्रु ॥ मायाभासेन जीवेशौकरोति । मायाचाविद्याच स्वयमेव भवतीति श्रुतिसिद्धत्वेन मायाविद्याभेद स्तत्कृतोजीवेशभेदश्च न दुष्यतीतिचेन्न । अस्याश्रुते रष्टोत्तरशतेपिनिषत्सुअपरिदृशमानत्वा त्केवलाद्वैतमूलाचार्यैः प्रस्थानत्रयभाष्येषु कुत्रा प्यनुदाहृतत्वाच्च कल्पित त्वावगमेन निर्मूलत्वात् ॥

नच— श्री. विद्यारण्यैः पञ्चदश्यामुदाहृततयाऽस्याः समूलत्वं सिध्यतीति शंक्यम् । अशेषवेदशास्त्रव्याख्यातृभिरपि तैः केवलाद्वैतप्रसाध

नायानुद्दृम्कित मूलशाखैवे य मुदाहृतेत्यनेन परपक्षस्य निर्मूलतैव स्फुट मुद्योतितेत्यहो दौस्थ्यम् परपक्षस्येत्यलम् ॥

अव ॥ अथ पराभिमतम्ब्रह्मणोनिर्विशेषत्वन्निरुपकारकमिति पर रीत्यैव प्रतिपादयति ॥ यथा ॥

मू ॥ सृष्टिस्स्पष्ट ममेयमङ्गळगुणब्रह्मप्रयोज्यामता ।
किंचोपास्ति रपि त्वयैवसगुणब्रह्माश्रयाकीर्तिता ।
मुक्तिश्चापिविनिश्चितैव सगुणब्रह्मस्वभावोज्वला ।
ब्रूहि प्राप्य मजागळस्तनसमा त्किन्निर्गुणब्रह्मणः ॥

सृष्टिरिति ॥ अत्रेदं वेद्यं । सेश्वरास्ताव दीश्वर ञ्जगतः कारण मुपास्य म्मुक्तावाप्यंचाभिमन्वते । पराभिमतन्तु तत्व न्निर्विशेष न्नकारणत्वेन नोपास्यत्वेन नमुक्तावाप्यत्वेनवा परै रप्पूरीक्रियते ॥

तथाहि — जन्माधिकरण शाङ्करभाष्ये-जन्मस्थितिभङ्गम् । सर्वज्ञा त्सर्वशक्ते रित्यनेन सृष्टि स्सगुणैक विषयेति स्पष्टमेव । एवमानन्द मयाधिकरणे तदीय एव भाष्ये-एकमपिब्रह्माऽपेक्षितोपाधिसम्बन्ध न्निरस्तो पाधि सम्बन्ध ञ्चोपास्यत्वेन ज्ञेयत्वेन च वेदान्ते षूपदिश्यतइति ॥ एतेन उपास्ति स्सगुणैक विषयैवेति विदितमेव ॥ तथा न्यायरक्षामणाव द्वैत विद्याचार्य कृतौ । दहराधिकरणे-मुक्तानाम् यावत्सर्वमुक्तिं विम्बे श्वर भावापत्ति रस्तीत्यस्माभि स्सिद्धान्त लेशसंग्रहे समर्थितत्वेनेति ॥ तदीये संग्रहेपि मुक्तस्वरूप निरूपणे तस्मा द्यावत्सर्वमुक्ति परमेश्वर भावो मुक्तस्येतिच । अव याव त्सर्वमुक्तीत्यनेन सर्वमुक्तेरिव निर्गुण ब्रह्म

गैक्यस्या प्यसम्भाव्यता स्पष्टीकृता ॥ तस्मा न्निविशेष ब्रह्माभ्युपगमः क्लीव भर्तृ परिग्रह कल्पएवेति विशदम् ॥

एवंच निर्विशेषम्ब्रह्म वस्तुतो नसिध्यति । तुष्यतु न्यायेन तत्सिध्यभ्युपगमेपि तस्यनैरर्थ्यं मविचलमि त्याकूतम् ।

अव ॥ अथ परकीयस्य पथो वेदपथव्यतिरिक्तता न्निरूपयति ॥

मू ॥ यद्भेदं सहजं वदन्ति निगमा जीवेशयो रन्तत
स्सृष्टिं यत्परमेशितु र्निजगदु स्सङ्कल्पपूर्वामपि ।
मुक्तिं य त्पुन रर्चिरादिकगतिप्राप्यां विनिश्चिन्वते
शुद्धाद्वैतपथोऽतिरिक्तइतिहि श्रुत्यध्वनो निश्चितः ॥

यदिति ॥ शुद्धाद्वैतवादेकिल जीवेंशयो र्भेदः कल्पितएव नवास्त वः ॥ श्रु ॥ द्वा सुपर्णा सयुजा सखाया । ज्ञाज्ञौ द्वा वजावीशानीशौ ॥ समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । पृथ गात्मान म्प्रेरितारञ्च मत्वा ॥ इत्यादिका श्श्रुतयस्तु जीवेशयो रात्यन्तिक म्भेदं स्वाभाविक मावेदयन्ति ॥

किंच, विमतेतावत् सृष्टि रनिर्वचनीया । जगच्च भ्रान्तिसिद्ध मिति विदितमेव । श्रुतयस्तावत् । श्रु ॥ सोऽकामयत । बहुस्या म्प्रजा येयेति । स ईक्षत लोकान्नु सृजाइति ॥ इत्यादिका जगत्सृष्टि म्महेशितु स्सङ्कल्पसिद्धा माचक्षते ॥ एव म्परमेश्वरेण सङ्कल्पपूर्वकं सृष्ट ञ्जग दित्यावेद्यमाने जगतो भ्रान्तिसिद्धत्वाभ्युपगमपक्षस्य श्रुत्याशयवैपरीत्य मविशङ्कम् ॥

अपिच, शुद्धाद्वैतपक्षे विमुक्ते रैहिकत्वेन विदुषो गत्यभावो निश्चित इति विशदम्। श्रुतयस्तु ॥ तेऽर्चिष मभिसम्भवन्ति। यएष सम्प्र सादोऽस्माच्छरीरा त्समुत्थाय परंज्योति रुपसम्पद्य स्वेन रूपेणाऽभिनि ष्पद्यत इत्यादिका विमुक्ति मर्चिरादिगतिलभ्या न्निर्धारयन्ति ॥ अन्यच्च। य स्सर्वज्ञ स्सर्वविदित्यादिका श्श्रुतयः परमेश्वर मनन्तमाङ्गल्यगुणरत्ना कर मावेदयन्ति। तत्रतु वादे ब्रह्म निर्गुणमिति विदितमेव ॥ तस्मा च्छुद्धाद्वैत्यभिमताना मर्थाना ङ्कृत्स्नश श्श्रुत्यर्थविपरीततया तदीयस्य पथ स्सर्वश्रुतिनिगदितब्रह्मपथा दतिरिक्तत्व मवार्यमिति हृदयम् ॥

नच—एक मेवाऽद्वितीय म्ब्रह्मेत्यादिश्रुतिसूक्तिभि श्शुद्धाद्वैत वाद श्श्रुतिसिद्ध इत्यवगम्यतइति वाच्यम्। तादृशार्थस्यापातप्रतिपन्न त्वेन श्रुतितात्पर्यसिद्धत्वाभावात्। अन्यथा - अन्न म्ब्रह्मेतिव्यजनादिति सूक्त्या देहात्मवादस्यापि श्रौतत्वानिवारणात् ॥ अधिक मग्रे भवि ष्यतीत्यलम् ॥

अव ॥ परकीयस्याऽध्वन स्सर्वश्रुतिविरुद्धत्वप्रतिपादनद्वारा श्रुति पथव्यतिरिक्ततां विस्पष्टयितु माह ॥

मू ॥ य च्छास्त्राणि विमूढमात्रविषया ण्यूरीकृतानि त्वया<br>
यच्च ब्रह्म विनिश्चितम् श्रुतिगिराम् लक्ष्य न्नवाच्यंक्वचित्<br>
कार्त्स्न्येनैव निषिद्धचास्मि भवतः पक्ष म्व्युदस्यन्ति यत्<br>
त त्सर्वोपनिषद्विरुद्धइति सम्सिद्ध स्त्वदीयो मतः ॥

यदिति ॥ अत्रेदं बोध्यं ॥ अध्यासभाष्ये। तमेत मविद्याख्य मात्मानात्मनो रितरेतराध्यास म्पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा

लौकिका वैदिकाश्च प्रवृत्ताः । सर्वाणिच शास्त्राणि विधिप्रतिषेधमोक्ष पराणि ॥ कथंपुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति ॥ उच्यते ॥ देहेन्द्रियादि ष्वहम्ममाभिमानरहितस्य प्रमातृत्वानुप पत्तौ प्रमाणप्रवृत्यनुपपत्तेः । नहीन्द्रिया ण्यनुपादाय प्रत्यक्षादिव्यवहार स्सम्भवति । नचाधिष्ठान मन्तरे णेन्द्रियाणां व्यवहार स्सम्भवति । नचाऽनध्यस्तात्मभावेन देहेन कश्चिद्व्याप्रियते ॥ नचैतस्मि न्सर्वस्मि न्नसति असङ्गस्यात्मनः प्रमातृत्व मुपपद्यते । नच प्रमातृत्व मन्तरेण प्रमाण प्रवृत्ति रस्ति ॥ तस्मा दविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि शा स्त्राणिचेति निगदितम् ॥ एव म्प्रमातृत्व मविद्या मूलकमि त्यभ्युपग मस्य भेदप्रतिपादकशब्दादिप्रामाण्य निराकरणार्थत्वेनपरपक्षस्य शब्दादि सर्वप्रमाणविरुद्धत्वम् स्वाभ्युपगतमेव ।

नच, प्रमातृत्व माध्यासिकमिति प्रमितमिति वाच्यम् ॥ ज्ञाज्ञा वित्यादिश्रुतिषु, ज्ञोत एवेतिसूत्रेच प्रमातृत्वस्यात्मन स्स्वभावतया राद्धा न्तितत्वेन पराभिमतस्य श्रुतिसूत्रप्रतिरुद्धत्वात् ॥ एव मध्यासवादस्य द्वासुपर्णेत्यादिकृत्स्नशास्त्रसिद्धस्य सकलोपनिषदर्थं निर्धारणपरब्रह्मसूत्रनि र्णीतस्यच जीवब्रह्मभेदस्य ब्रह्मण स्सप्रपञ्चत्वस्य चाऽपनुनोदयिषया प्रवर्ति तत्वेन तस्य सर्वश्रुतिसूत्रविप्रतिपन्नत्वं विशदमेव ॥

किंच, परम्ब्रह्म शब्दस्य लक्ष्यमेव नवाच्यमि त्यूरीकृतम्परैः ब्रह्मणो निर्विशेषत्व म्प्रसिसाधयिषुभिः । लक्षणाया स्ता त्पर्यानुपपत्तिमूलक तया लक्षणाश्रयणेनापि परै स्स्वसमयस्य श्रुतितात्पर्यानुपपन्नत्व माविष्कृ तमेव ॥

अपिच, शब्दस्य शून्यादिक म्सर्वमपि लक्ष्य म्भवितुमर्हति निर्विशेषमात्रमिति नराजाज्ञास्ति । तस्मा त्तद्रीत्या शून्याद्वैतस्यापि सिद्ध प्रायत्वेन शब्दस्यासाधकत्वा त्परकीय स्समय श्शब्दादिसर्वप्रमाणविधुर इति ॥ एवम् सामान्याकारेण परमतस्य श्रुतिविरुद्धता न्निरूप्य विशिष्य सर्वश्रुतिविरुद्धताम् प्रतिपिपादयिषु राह ॥ कात्स्न्येंनेति॥ तथाहि, जीवब्रह्मैक्यमेव शास्त्रस्य विषयः, प्रयोजनंचे त्यभिमन्यतेप रैः । तद्धि, श्रु ॥ पृथगात्मान म्प्रेरितारंच मत्वेत्यादिप्रत्यक्षश्रुतिविरुद्धम् ॥

ननु, सर्वासाम प्युपनिषदा मात्मैक्यप्रतिपादनपरत्वेन तदविरो धाय भेदप्रतिपादकं यत्किंचिदपि वाक्य ङ्कल्पितभेदपरतया नेय मितिचे, न्न । सर्वासामपि निषदा म्सविशेषशिवाद्वैतप्रतिपादकत्वात्, तथाहि ।

## ईशावास्यविचारः

सकलानामपि निषदा म्मुखस्थानीयतयाऽग्रगण्या ईशावास्योपनि षत् । ईशावास्य मिदगुम् सर्वं यत्किंचेत्यादिना सर्वोत्तरपराक्रमे णोपक्र मेण शिवासाधारणाभिधानश्रुतिविभूषणेन सर्वात्मतया महेशितु स्तन्निय म्यतया सर्वस्यापि शरीरशरीरिभाव मावेदयन्ती अनीश्वरब्रह्मवादिना मना मकब्रह्मवादिनांच पक्षा न्प्रतिक्षिपन्तीच शिवाद्वैतएव निजम्भाव मुद्घोष यति ॥

ननु, अस्या न्निषदि, यस्तु सर्वाणि भूता न्यात्मन्येवाऽनुप श्यति । सर्वभूतेषु चात्मान न्ततो विजुगुप्सते । इतिमन्त्रेण आत्मैक्यस्य

प्रतिपादना दियं शुद्धाद्वैतसाधि केतिचेन्न, अत्रत्यात्मपदस्य परमेश्वरपर त्वेन परमेश्वरगतसर्वभूताधिकरणत्व सर्वभूतान्तर्यामित्वप्रतिपादकतयाऽस्य मन्त्रस्य जीवब्रह्मैक्यगन्धसम्बन्धादर्शनात् ॥

नच, यस्मि न्सर्वाणि भूता न्यात्मैवाऽभू द्विजानतः ।

तत्र कोमोहः कश्शोक एकत्व मनुपश्यतइति मन्त्रस्य परमार्थ दशाया मेकत्वप्रतिपादनपरत्वे नेय न्निष त्केवलाद्वैतसाधि केतिशंक्यम्, यस्मि न्परमेश्वरे स्थितानि भूतानि, तेषुच परमेश्वरएवाऽन्तर्या म्यभूत्, एव मन्तर्बहिश्च व्याप्यस्थितस्य परमेश्वर स्यैकत्व मनुपश्यत स्तत्वविद श्शोकमोहादिराहित्यस्यैव प्रतिपादनेनाऽनया शिवाद्वैतस्यैव निर्धारित त्वात् ॥

किंच, इम मेवाऽर्थमन्योपि मन्त्रआहेति परै रप्यवतारितत्वे नाऽस्मि न्मन्त्रे पूर्वमन्त्रा द्विशेषालाभाच्च ॥

अपिच, उपसम्हारे, कविं र्मनीषी त्यादिना परमेश्वरस्य सर्वज्ञ त्वाद्यनन्तमाङ्गल्यगुणप्रतिपादनेन, य त्ते रूप ङ्कल्याणतम म्पश्यामीति परमेश्वरस्य दिव्यमङ्गळविग्रहप्रतिपादनेनच इयं शिवाद्वैतसाधिकैवे त्यलम् ।

## केनोपनिषद्विचारः

---

एव ङ्केनोपनिषदपि शिवाद्वैतबोधिन्येव ॥ तथाहि -

के नेषित म्पतति प्रेषित म्मनः। केन प्राणः प्रथमः प्रैति युक्तः । के नेषितां वाच मिमां वदन्ति। चक्षु श्श्रोत्रं कउ देवो युनक्ति

इत्यादिना धीप्रेरकत्वरूपपरमेश्वरलिंगेन सर्वनियन्तृत्वरूपमाङ्गल्यगुणयोगेनचाऽस्या स्सविशेषशिवाद्वैतप्रतिपादकत्वात् ॥

ननु—अत्र - यस्याऽमत न्तस्य मतम् । अविज्ञात म्विजानता म्विज्ञात मविजानतामिति ब्रह्मणो ज्ञानाविषयत्वनिरूपणेनाऽस्याः केवलाद्वैतपरत्व मवगम्यतइतिचेन्न । ब्रह्मणो ज्ञानाविषयत्वस्य ॥ श्रु॥ ब्रह्मविदाप्नोति परम् । ईशम् ज्ञात्वा अमृता भवन्तीत्यादिबहुश्रुतिबाधितत्वेन - एतादृशवाक्याना मसंख्येयगुणत्वाद्ब्रह्मण एतावदिति परिच्छेदज्ञानवता मब्रह्माऽविज्ञात ममत मि त्यर्थकत्वावगमात् ॥

नचाऽत्र - तदेव ब्रह्म त्व म्विद्धि नेदम् यदिद मुपासतइति ब्रह्मण उपास्यत्वनिषेधे नेयं केवलाद्वैतसाधि केतिचे न्नैवम्। तेन वाक्येन तादृशार्थानवगमात् । तथाच ॥

अस्याऽय माशयः - य दिद म्प्रतीक मुपासते तन्न । तदेव ब्रह्म त्व मुपास्वेति ॥

अन्यथा । श्रु॥ प्राचीनयो ग्योपास्व । सू ॥ सर्ववेदान्तप्रत्यय श्चोदनाद्यविशेषादिति श्रुतिसूत्रावगताना मुपासनाविधीना मानर्थक्य प्रसङ्गात् ॥

किंच—अत्र तृतीयखण्डे , ब्रह्मह देवेभ्यो विजिग्ये इत्यदिना ब्रह्मणो विजय स्याम्नानेन तस्य सविशेषब्रह्मकृत्यतया तेन निर्विशेषब्रह्मवाद न्निर्मूलयति ॥

तथाच, ब्रह्मह देवेभ्यो विजिग्ये । तस्यह ब्रह्मणो विजये देवा अमहीयन्त, त ऐक्षन्ताऽस्माकमेवाऽय म्विजयोऽस्माकमेवाऽय म्महिमेति ।

तथैषा म्विजज्ञौ तेभ्योह त न्नव्यजानन्त। किमिदम् यक्षमिति, तेऽग्नि मब्रुव ञ्जातवेद एत द्विजानीहि। कि मेत द्यक्षमिति, तथेति ॥ त मभ्य द्रव त्तमभ्यवद त्कोसी त्यग्निर्वा अह मस्मी त्यब्रवी ज्जातवेदावा अह मस्मीति। तस्मि मस्त्वयि किम्वीर्यमि त्यपीद मसर्वं न्दहेयम् यदिद म्पृथि व्या मिति ॥ तस्मै तृण न्निदधा वेतद्दहेति। त दुपुप्रेयाय, सर्वजवेन त न्नशशाक, दग्धु न्नततएव निववृते। नैत दशकम्विज्ञातुम्, य देतद्यक्ष मिति ॥ अथ वायु मब्रुव न्वाया वेत द्विज्ञानीहि। कि मेतद्यक्षमिति। तथेति, तमभ्यद्रवत्त मभ्यवद त्कोसीति। वायुर्वा अह मस्मी त्यब्रवी न्मातरिश्वावा अह मस्मीति। ७, ८ ॥ तस्मि मस्त्वयि कि म्वीर्यमि त्यपीदग् म्सर्वं वहेयं। यदिद म्पृथिव्यामिति ॥ ९। तस्मै तृण न्निदधा वेतदादत्स्वेति तदुपप्रेयाय। सर्वजवेन तन्नशाकादातुम्, स ततएव निव वृते, नैत दशक म्विज्ञातु न्तदेतद्यक्षमिति। अ थेन्द्र मब्रुव न्मघव न्नेत द्विजानीहीति। कि मेतद्यक्षमिति। तथेति। त दभ्यद्रव त्तस्मा त्त त्तिरो दधे। स तस्मिन्ने वाकाशे स्त्रिय माजगाम बहुशोभमाना मुमाम् हैम वती न्ताग् म्होवाच किमेत द्यक्षमिति ॥

अतएवाऽत्र परैरपि, तदेव ब्रह्म सर्वप्रकारेण प्रशास्तृ, देवाना मपिपरो देवः। ईश्वराणाम पीश्वरः। दुर्विज्ञेयो देवाना ञ्जयहेतुः। असुराणा म्पराजयहेतुरिति व्याख्यातम् ॥ एतद्विवरणमपि ब्रह्म सगुणमेव निर्धार यति ॥

अपिच। स तस्मिन्ने वाकाशे स्त्रिय माजगाम बहुशोभमाना मुमाम् हैमवतीन्तागम् होवाच। इति श्रवणेन यक्षरूपेण शिवेतरदेवताया

आगमने हैमवत्यागमनस्याऽसङ्गत्या सविशेषमपि ब्रह्माऽम्बिकापतिरेवेति निर्धारणेन ब्रह्म निर्गुणमिति शिवेतरमितिच विवदता म्परेषा मपरेषांच वादा नवधूय सविशेषशिवाद्वैतएव निज म्भाव मभिव्यनक्ति ॥

ननु—शङ्कराचार्यैः , ब्रह्मविद्यास्तुतये , प्राणिना ङ्कर्तृत्वाद्यभि मानो मिथ्येति दर्शनार्थम्चा आख्यायिका इत्युक्त मितिचे । न्न । नर्गुण ब्रह्मविद्यायाएव शशविषाणायमानत्वेन , तस्या विद्यमानत्वाभ्युपगमेपि , ईश्वरप्रशम्सया शून्यवादस्येव सगुणप्रशम्सयानिर्गुणविद्यास्तुत्ययोगेना स्यास्सगुणब्रह्मविद्याभूतार्थवादरूपत्वावारणात् ॥

किंच— सू ॥ परात्तु तच्छ्रुतेरिति परमेश्वराधीनकर्तृत्वस्य शास्त्र सम्मतत्वेन प्रकृताख्यायिकया स्वायत्तकर्तृत्वाभिमानस्यैव मिथ्यात्वप्रतिपाद नेन तेन अकर्त्रात्मप्रतिपत्तिरूपपराभिमतार्थस्य प्रकृतोपनिषद्विरुद्धतया इयं शिवाद्वैतपरै वे त्यलम् ॥

अत्र—हैमवत्यागमनश्रवणे नोमापतिरेव परम्ब्रह्मेति निर्धार्यते । अपिच - स्कान्दादिषु शिवपरत्वे नोपबृम्हणदर्शना द्वैष्णवेषुवा पुराणेषु विष्णुपरतयाऽस्या निषदोऽनुपबृम्हणाच्च केवल मियं शिवाद्वैत प्रतिष्ठा प्रनपरै वे त्यल मधिकेन ॥

## कठोपनिषद्विचारः

तथा, कठोपनिषदपि शिवाद्वैतप्रतिपादनपरैव ॥

तथाहि—श्रु ॥ ऋत म्पिबन्तौ सुकृतस्य लोके गुहा म्प्रविष्टौ परमे परार्थे । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो येच त्रिणाचिकेता

इति मन्त्रे छायातपाविति नित्यानपायित्वेन परस्परात्यन्तविलक्षणत्वेनच जीवात्मपरमात्मानौ निवेदयन्ती जीवब्रह्मैक्यपक्ष म्प्रतिक्षिपति ।

नन्वत्र, छायातपशब्देन बुद्धिजीवावेव परिगृहीतौ नजीवेश्वरा विितिचेन्न । सू, गुहा म्प्रविष्टा वात्मानौहि तद्दर्शनादिति वैयासिक सूत्रे छायातपशब्दितौ जीवेश्वरावेवेति निर्धारितत्वात् ॥

तथाहि—गुहा म्प्रविष्टौ जीवेश्वरावेव, तत्र हेतुः-आत्मानौहीति, यस्मा दृतपानेन लिङ्गेन एकस्य चेतनत्वनिश्चयेन तदन्योपि चेतनएव परिगृह्यते, यथा—अस्य गो र्द्वितीय इत्युक्ते सोपि गौरेवेति साजात्यनियमेन गृह्यमाणत्वात् ॥

तद्दर्शना दित्यस्य परमेश्वरस्य गुहाप्रवेशदर्शना दिति हेत्वन्तरम् ॥

सू ॥ विशेषणाच्चेति सूत्रेणापि पूर्वापरमन्त्रेषु मन्तृमन्तव्यत्वेन प्राप्तृप्राप्तव्यत्वेनच जीवेश्वरयो र्बहुधा विशेषितत्वेनच तेषु मन्त्रेषु तयो र्भूयस्सम्बन्ध मनुभूतवतो रस्मि न्मन्त्रे ऋतपानलिङ्गावगमितजीवद्वितीयः पर इत्येव निर्णयो भवितु मर्हतीति तस्मा दस्मि न्मन्त्रे निर्दिष्टौ जीवेश्वरावेवे त्यनवद्यम् ॥

ननु, जीवब्रह्मैक्यस्य शास्त्रतात्पर्यविषयत्वेन प्रकृतमन्त्रः कल्पितभेदपर इतिचेन्न, जीवपरयो स्स्वरूपैक्यस्य देहात्मनोरिवाऽसम्भावितत्वात् ॥ अतएव, द्वा सुपर्णा सयुजा सखाया । समान न्वृक्ष म्परिषस्वजाते । तयो रन्यः पिप्पलग्म् स्वाद्व त्त्यनश्न न्नन्योऽभिचाकशीतीत्यदिभिरनेकै र्मन्त्रै र्भेदव्यपदेशाच्चेत्यादिसूत्रैश्च जीवपरभेद स्स्वाभाविकइ त्यवगम्यते ।

किंच—अंगुष्ठ मात्रः पुरुषो ज्योतिरिवाऽधूमकः । ईशानोभूत भव्यस्य सएवाऽद्य सउश्वइति मन्त्रेणा पीशानशब्दितमेव सकलजगन्निय न्तृतया सविशेषम्ब्रह्म निर्धारयन्ती परमेश्वर मनामक मन्यनामकम्वाऽभि मन्वता म्परेषा मपरेषांच मता न्निराकरोतीति व्यक्तमेव ॥

अपिच—श्रु ॥ यस्य ब्रह्मच क्षत्रंचोभे भवत ओदनः । मृत्युर्य स्योपसेचन ङ्क इत्था वेद यत्र स इतिमन्त्रेणापि ब्रह्मक्षत्रशब्दाभ्यां चराचरात्मक विनाशि वस्तुजातम् लक्षयन्तो ब्रह्मक्षत्रयोः मृत्योश्च ओद नोपसेचनभावरूपणा द्दध्यन्नरीत्या सम्बन्ध न्योतयन्ती सकलमपि प्रपंच म्भ्रान्तिपरिकल्पितम् ज्ञानमात्रविनाश्यम्वा नभवति । किन्तु परमेश्वर कर्तृक न्तत्सम्हर्तृकंचेति सिद्धान्तयन्तीच शिवाद्वैतमेव प्रतिप्ठापयतीति युक्तम् ॥

अन्यच्च—अन्तः प्रविष्ट श्शास्ता जनाना मितिमन्त्रेण जगदीश्व रयो र्नियम्यनियामकभावसिद्धम् शरीरशरीरिभाव मुपदिशन्तीच शिवा द्वैतएव निज म्भाव मनुवध्नाति ॥

इदंच—यदिद ङ्किञ्च जग त्सर्व म्प्राण एजति निस्सृतम् । मह द्भय म्वज्र मुद्यतम् य एतद्विदु रमृतास्ते भवन्तीति मन्त्रेणापि उद्यत म्वज्रायुधमिव महद्भयम् । बिभे त्यस्मादिति व्युत्पत्या भयकारणत्वेन प्रशासकम् । सर्वशक्तिविशिष्टमेव ब्रह्म नतु सस्यपरिपालनार्थकल्पित तृण मयकृत्रिमपुरुषतुल्य न्निर्विशेषमिति ज्ञापयन्ती निर्गुणब्रह्मवादिना मनी श्वरवह्नवादिनांच मता न्निर्धूय शिवाद्वैतम् राद्धान्तयतीति सुव्यक्तम् ॥
अथाऽत्र यत महद्भय मित्यादिना निगदित म्प्रशासकत्व ञ्च पारमार्थिकम्॥

किन्तु——मायाकल्पितस्यैव महेशितु र्नियन्तृत्वबोधनद्वारा नियन्त्रन्तरनिषेधमुखेन ब्रह्मणो वस्तुपरिच्छेदराहित्यपरमिति दीक्षितेन्द्रै र्न्यायरक्षामणावुक्तम् । तदसङ्गतम् । श्रुत्यर्थस्यापारमार्थिकत्वाभ्युपगमे श्रुतीनामप्रामाण्यापातात् । कल्पित स्येशितु र्नियन्तृत्वबोधनस्य निष्प्रयोजनत्वात् । वस्तुपरिच्छेदराहित्ये नियन्त्रन्तरनिषेधस्यानुपपत्त्या नियन्त्रन्तरनिषेधमुखेन वस्तुपरिच्छेदस्यैवसिद्ध्या तदभावस्या ऽसिद्धेश्च ॥

तस्मा त्परकीयम् श्रुत्यन्तविवरणम् स्वमते श्रुत्य साङ्गत्य प्रकाशकमेवे त्यलम् ॥

अथात्र यदप्युक्तम्—— शिवाद्वैत निर्णयेऽप्पयदीक्षितेन्द्रैः कठवल्लीषु नचिकेतउपाख्याने ।

एव मत्रोपाख्यायते——वाजश्रवसो महर्षि स्सर्ववेदसदक्षिणेन यज्ञे नेष्ट्वा जरद्गवी र्दक्षिणाः प्रयच्छन् बालेन नचिकेतसा पुत्रेणाऽनर्हदक्षिणादाननिमित्तक्रतुवैकल्या त्पितु रनिष्ट माशङ्कमानेन तदनिष्टं स्वात्मप्रतिपादनेनापि क्रतुसपम्त्ति ङ्कारयित्वा निवारणीयमिति मन्यमानेन तात कस्मै मा न्दास्यसीति पुनःपुनः पृष्ट्वा बहुवारप्रश्ननिर्बन्धसञ्जातकोपस्य "मृत्यवे त्वा ददामी त्युक्तवतः पितु र्वचनेन" नचिकेता स्तदैव मृत्युलोक ङ्गत्वा मृत्यो र्द्वारि तिस्रो रात्री रनश्न न्नुषित्वा प्रवासागतेन मृत्युना ब्राह्मणो यदनश्नन् द्वारि स्थितइति भीतेन त्री न्वरा न्वृणीष्वेति पृष्टः प्रथमेन वरेण पितु स्सौमनस्य न्द्वितीयेनाऽग्निविद्यांच प्रतिलभ्य, अथ येयम्प्रेतइति पपच्छ ॥ यथा—येयं म्प्रेते विचिकित्सा अस्तीत्येके नायम

स्तीति चैके। एत द्विद्या मनुशिष्ट स्त्वयाऽह म्वराणा मेष वर स्तृतीयः॥
इति मृतजीवविषयप्रश्ने नचिकेतसा कृते।

त न्दुर्दर्श ङ्गूढ मनुप्रविष्ट ङ्गुहाहित ङ्गह्वरेष्ठ म्पुराणम्। अध्या त्मयोगाधिगमेन देव म्मत्वा धीरो हर्षशोकौ जहातीति वैवस्वतेन पर मात्म विषय न्तदुत्तर मुक्तम्॥

तथाहि—प्रश्नस्यतावत् मृतजीवविषयत्वं सुदृढम्। प्रेतशब्दस्य तत्र रूढत्वात्॥

"इमा रामा स्सरथा स्सतूर्या नहीदृशा लम्भनीया मनुष्यैः। आभि र्मत्प्रत्ताभिः परिचारयस्व नचिकेतो मरण म्मानुप्राक्षीः"॥ इतिवैव स्वतेन तदीयप्रश्नस्य मृतजीवविषयत्वस्फुटीकरणात्॥

"यस्मि न्निद म्विचिकित्सन्ति मृत्यो यत्साम्पराये महति ब्रूहि नस्तत्" इति पुनः नचिकेतसा मरणविषयत्वेनाऽमङ्गळतया वैवस्वतेन निन्दितस्यैव स्वप्रश्नस्य निर्णयत्वेन पृष्टत्वात्॥ तदनन्तरं म्वैवस्वतेन "नसाम्परायः प्रतिभाति बाल म्प्रमाद्यन्त म्वित्तमोहेन मूढम्, अयंलोको नास्ति परइति मानी पुनःपुन र्वश मापद्यतेमे॥ इति। नाय मस्तीति चैके इति पक्षदूषणपूर्वकमे वोत्तरस्य चोपक्रान्तत्वात्-अग्रेच।
"हन्त त इद म्प्रवक्षामि गुह्य म्ब्रह्म सनातनम्। यथाच मरण म्प्राप्य आत्मा भवति गौतम॥ योनि मन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणु मन्येऽनुसम्यन्ति यथा कर्म यथाश्रुतम्॥

इति साक्षा न्मृतजीववृत्तान्तविष योत्तरदर्शनाच्च। तथा, त न्दुर्द र्शमित्यद्युत्तर म्परमात्मविषय मित्यपि सुदृढम्। प्रश्नानन्तर म्वैवस्वतेन॥

देवै रत्रापि विचिकित्सित म्पुरा नहि सुविज्ञेय मणुरेष धर्मः। अन्यं वरं नचिकेतो वृणीष्व मामोपरोत्सी रतिमासृ जैनमिति प्रश्न स्योत्तर मतिगहनार्थविषयं वक्तु न्दुश्शकमित्युक्तत्वात् ॥ ततो नचिकेतसा ,

"देवैरत्रापि विचिकित्सितङ्किल त्वञ्च मृत्यो यन्न सुविज्ञेयमात्थ। वक्ताचाऽस्य त्वादृगन्यो नलभ्यो नान्यो वर स्तुल्य एतस्य कश्चित् ॥

इति पृष्टमे वोपदेष्टव्यमिति प्रार्थिते वैवस्वतेन पुन स्तस्याऽधि कारदार्ढ्यपरिचिक्षिषया।

"शतायुषः पुत्रपौत्रा न्वृणीष्व बहू न्पशू न्हस्तिहिरण्य मश्वान् भूमे र्मह दायतनं म्वृणीष्व स्वयञ्च जीवशरदो याव दिच्छसि"

इत्यारभ्य "नचिकेतो मरण म्मानुप्राक्षी" रित्यन्तेन पृच्छ्य मानार्थापेक्षया पुत्रादिसम्पत्ते र्महापुरुषार्थत योक्तत्वेपि नचिकेतसा —

"श्वो भावामर्त्यस्य यदन्तकैत त्सर्वेन्द्रियाणा ञ्जरयन्ति तेजः अपिसर्वं ञ्जीवित मल्पमेव"

इत्यादिना "अभिध्याय न्वर्णरतिप्रमोदा नतिदीर्घे जीवितेकोर मेत" इत्यन्तेन विषयान् श्वस्स्थायित्वेपि सन्दिग्धत्वेन सर्वेन्द्रियतेजः क्षपयितृत्वेनच निन्दित्वा चिरजीविकामपि ब्रह्मादिकीटान्त सकल प्राणिवर्तिन स्सर्वस्यापि जीवितस्याऽल्पकालत्वेन निन्दित्वा प्राक्पृष्टमे वोपदेष्टव्य मिति दृढं प्रार्थिते तस्याऽधिकारस्थैर्य मुपलभ्य निश्रेयस म भ्युदयंच पुरुषार्थानुबन्धिफलद्वयम् श्रेयः प्रेयश्शब्दाभ्या म्प्रविभज्य तदु भयं विविंचन् धीर श्श्रेयो वृणीते मन्दस्तु प्रेयःइत्याद्युक्त्वा नचिके तसो वर म्प्रशस्य।

"विद्याभीप्सिन न्नचिकेतस म्मन्ये नत्वा कामा वहवोलोलुपन्त
" इति विद्याभीप्सुत्वेन तदुपयोगि दृढवैराग्यवत्वेनच नचिकेतसम्प्रशस्य"
नसाम्पराय इत्यादिना देहात्मवाद निराकरणपूर्वकम् ॥

" श्रवणायापि बहुभि र्योनलभ्य
श्शृण्वन्तोपि वहवो यंनविद्यु:
आश्चर्यो वक्ता कुशलोऽस्य लब्धा
आश्चर्यो ज्ञाता कुशलोनुशिष्ट: ॥

इत्युपदेष्टव्यस्यात्मनो दुरधिगमत्व मुक्त्वा वैवस्वतेन ।

" त न्दुर्दर्शमित्यादे रनुक्रान्तत्वाच्च । एव ञ्जीवविषयप्रश्नस्य परमात्मविषयोत्तरदर्शनात् जीवब्रह्मणो रभेद: श्रुत्यभिप्रेत इत्युन्नीयते । अन्यथा प्रश्नोत्तरयो र्वैयधिकरण्यापत्तेरिति " त द्युक्तम् ॥

उत्तरस्य परमात्मविषयत्वेपि नचिकेतस: प्रागेव तदस्तित्वविश्वासवत्वेन प्रश्नस्य मृतजीवास्तित्वनास्तित्वविषयत्वानुपपत्ते: ॥

अन्यथा ; पितु: क्रतुवैकल्यदोषपरिहारार्थम् " तात कस्मै मान्दास्यसीति वचनस्य " मृत्यवे त्वा ददामीत्युक्तवत: पितु रनृत दोषपरिहारार्थं स्वय म्मृत्युलोकगमनस्य " सस्यमिव मर्त्य: पच्यते सस्यमिवाजायाते पुन: ,, इति तदीयस्य वचनस्य स्वर्गफलकाग्निविद्या वरणस्यचाऽनुपपत्ते: ॥

नच , प्रश्नस्य मुक्तजीवास्तित्वनास्तित्वविषयत्वे तन्मात्रस्यैव निर्धारणीयतया परमात्मतत्प्राप्त्युपायाद्युपदेशानुपपत्तिरिति शंक्यम् , जीव परमात्मभेदवादिमतेपि मृतजीवास्तित्वनास्तित्वप्रश्ने तन्मात्रस्यैव निर्धार

णीयतया परमात्मतत्प्राप्त्युपायाद्युपदेशानुपपत्ते स्तुल्यत्वात् ॥ तस्मा त्प्रश्नोत्तरसामानाधिकरण्यान्यथानुपपत्त्या जीवब्रह्माभेदसिद्धिरिति दुराशा म्परित्यज्य प्रश्नोऽत्र मुक्तजीवविषयतयैव वर्णनीयः ॥

" नप्रेत्यसञ्ज्ञास्तीति वाक्ये मुक्तौ प्रेत्यशव्दप्रयोगदर्शनेन प्रक र्षेणेतः पुनरावृत्तिरहिता ज्ञति म्प्राप्तइति योगेन मुक्तविषयत्व मङ्गीकृत्य मुक्त्यनन्तरानुबन्धिमलमायादिसकलपाशक्षयपूर्वक ञ्जन्ममृत्युभयशोका द्यस्पृष्टपरमशिवलोकप्राप्तिम दात्मसद्भाव रूपविशेषोऽत्रवर्णनीयः ॥

एवंच, मुक्तेः परमपदाख्य परमात्मलोकप्राप्तिरूपत्वा त्तदर्थं मुत्तरे परमात्मनिरूपणे " सोऽध्वनः पार माप्नोति तद्विष्णोः परमम्पद मिति तदीयपरमपदप्राप्तिनिरूपण न्तदुपायनिरूपणंचेति सर्वसाङ्गत्य सिद्धेश्च ॥

नच, प्रश्नस्य मुक्तजीवास्तित्वविषयत्वेपि तदस्तित्वमात्र स्यैव वक्तव्यतया परमात्मस्वरूपतत्प्राप्त्युपायादिनिरूपण मसङ्गतमिति वाच्यम् । मुक्तेः परमपदाख्यपरमात्मलोकप्राप्तिरूपत्वेन तन्निरूपणस्य मुक्तजीवास्तित्वबोधनार्थतया स्मत्पक्षएव सुसङ्गतत्वात् ॥

नच, मुक्तजीवास्तित्वसंशयस्या ऽसम्भावितत्वेन तद्विषय प्रश्नोऽनुपपन्नइतिशंक्यम् । हितैषिवचनादिलब्धस्य मुक्तास्तित्वविश्वा सस्य दृढीकरणाय विशेषान्तरज्ञानायचतद्विषयप्रश्न स्योपपन्नत्वात् ॥

ननु, प्रेतशब्दरूढ्या मरण म्मानुप्राक्षीरि त्युत्तरसन्दर्भस्वारस्ये नच प्रश्नस्य मृतजीवविषत्व मवर्जनीयमिति शंक्यम् । प्रेतशब्दस्य मुक्तेपि वैदिकरूढेः प्रदर्शितत्वेन " मरण म्मानुप्राक्षीरि त्युत्तरसन्दर्भे

स्याऽधिकारदार्ढ्यपरिचिक्षिषार्थतया सप्रयोजनत्वेनच तयोर्मृतजीवविषय त्वसाधकत्वासम्प्रतिपत्तेः ॥ उत्तरत्र परमात्मतत्प्राप्त्युपायनिरूपणदर्श नेन-उपास्योपासनोपासकस्वरूपप्रतिपादनश्रवणेनच तदानुगुण्याय प्रकृत प्रश्नस्य मुक्तजीवविषयत्वसम्प्रतिपत्ते रवार्यत्वाच्च ॥

तथाहि - अनुमानाधिकरणे -

सू ॥ त्रयाणामेव चैव मुपन्यासः प्रश्नश्चेति ॥

अस्यभाष्यमपि--त्रयाणा मुपास्योपासनोपासकानामेवाऽत्रप्रक रणे ज्ञेयतया प्रश्नोपन्यासःक्रियतइति ॥

तथाच , श्रु ॥ त न्दुर्दर्शंगूढ मनुप्रविष्टं गुहाहितं गह्वरेष्ठ म्पुराणम् । अध्यात्मयोगाधिगमेन देव म्मत्वा धीरो हर्षशोकौ जहातीति । अत्र देव म्मत्वेति उपास्योपासनयो रध्यात्मयोगाधिगमेन धीरइत्युपास कस्य चोपन्यासो दृश्यते । अध्यात्मयोग उपासकान्तरात्म स्वरूपविषयो योगः । तथा प्रश्न स्तावत् । अन्यत्र धर्मा दन्यत्राऽधर्मादिति---वैष यिकहर्षशोकहेतुधर्माधर्मविलक्षणस्य उपास्यस्य प्रश्नः " यत्तत्पश्यसि तद्वदेत्यत्र यत्तत्पदयो स्तत्त्रितयविषयंत्वसम्भवात्त दनन्तरम् । तत्ते पदम् संग्रहेण ब्रवीमीति प्रतिवचन मुपक्रम्य " ओमित्येव तत् इत्यादिना उपासनसाधनप्रणवप्रशंसाद्वारा प्रणवेन ब्रह्मोपासने प्रदर्शिते श्रु॥ नजायते म्रियतेवा विपश्चिदित्यादिना उपासकस्वरूप मुच्यते । तस्मा त्तदानुगु ण्येन येय म्प्रेतइति प्रश्नो मुक्तजीवविषयइत्येव युक्तम् ॥ आतश्चना नेन जीवेश्वरभेदसिद्धिप्रत्याशेत्यलमधिकेन ॥

ननु । उत्तरत्र - श्रु ॥ यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्यो स्स मृत्यु माप्नोति यइह नानेव पश्यतीति जीवपरयो रभेदनिरूपणश्रवणेन इय मुपनिष त्केवलाद्वैतबोधिनीतिचे न्नैवम् ॥ अस्य वचनस्य । इह - देहे - विद्यमानस्याऽमुत्रादित्यमण्डलादिस्थाने विद्यमानस्यच परमेश्वरस्यैव नानात्वनिषेधकत्वेन जीवपरमात्माभेदबोधकत्वाभावात्॥

नच, स्थानभेदेन परमेश्वरेभेदप्रसक्त्यभावेन परमेश्वरनानात्वनिषेधपरत्व मयुक्तमिति वाच्यम् ॥ अत्रच विदेशे प्येकएव देवो रक्षितेति वाक्यवत् श्रु॥ सयश्चायम्पुरुषे यश्चसावादित्येसएकइतिवाक्यवच्च स्थानभेद प्रयुक्त परमेश्वरभेदप्रसक्ति प्रतिषेधपरत्वोपपत्तेः ॥

अन्यथा – श्रु ॥ द्वासुपर्णा । पृथ गात्मान म्प्रेरितारञ्चमत्वा – ऋतम्पिबन्ता वित्यादिषु बहुषु मन्त्रेषु जीवपरमात्मभेदश्रवणेन परस्पर विरोधेन व्याघाता न्निषदामेवाऽप्रामाण्यप्रसक्ते रनिवार्यत्वात् ॥

ननु, यइह नानेव पश्यतीति वचनानुरोधेन जीवपरमात्म भेदबोधकमन्त्राणा ङ्कल्पितभेदपरत्व मभ्युपगम्यत इतिचेन्न युक्तमेतत् । जीवपरमात्मभेदस्य बहुश्रुतिबोधितत्वेन क्वचिदप्यश्रुतायाभवन्मात्रकल्पिताया भेदकल्पितत्वकथाया श्रुतिविरोधेनाऽनुपादेयत्वात् ॥

नच, यइहेत्यादिजीवपरभेदनिषेधकवचनप्रामाण्येन भेदबोधकवाक्याना ङ्कल्पितभेदपरत्वे श्रुते स्तात्पर्य मुन्नीयतइति वाच्यम् यइहेत्यादिवचन स्येश्वरनानात्वनिषेधपरत्वे प्युपपन्नतया सम्भवदन्यार्थत्वेनजीवपरभेदनिषेधपरत्वरूपार्थनिर्णयासिद्धे रनिर्णीतार्थेन यइहेत्यादिवाक्येन असम्भावितान्यार्थकतया जीवेश्वरभेदबोधकतया निर्णीतार्थानां

न्बहूनां वाक्याना क्लृप्तभेदपरतया गौणार्थकत्वाभ्युपगमस्याऽयुक्तत्वा दीक्षत्यधिकरणोक्तन्यायविरुद्धत्वाच्च ॥

किंच, यइहेत्यादिवचनस्याऽल्पीयसो भेदबोधकवाक्यै र्भूयोभि र्विप्रतिषेधे – सू ॥ विप्रतिषेधे भूयसां स्या त्स्वधर्मत्व मितिन्यायानु रोधे नाप्रामाण्यप्रसक्त्या बहुवाक्यबोधित जीवपरभेदाविरोधार्थं मीश्वरनानात्व निषेधपरत्वस्यैव युक्ततरत्वाच्च ॥

एव मिय मुपनिष दुपास्योपासनोपासकविषयप्रश्नोत्तरविवरण मुखेन निषदा मुपासनाविधौ तदुपपादकसविशेषब्रह्मज्ञानेच तात्पर्यम् स्फुटमावेदयन्ती तासा मनुभवरूपज्ञानपरत्ववादिना म्पक्ष म्प्रतिक्षिप तीति विशदम् ॥

अपिच, श्रु ॥ नाय मात्मा प्रवचनेन लभ्यइत्यादिना मन्त्रेण परमेश्वरप्राप्तिरूपाया मुक्तेः परमेश्वरप्रसादैकनिबन्धनत्वं प्राप्य प्राप्त्रो र्जीवेश्वरयो श्शरीरशरीरभावञ्च निरूपयन्ती मुक्ते स्स्वस्वरूपाव बोधसिद्धत्व म्ब्रह्मणो निर्विशेषत्वं चाभिमन्वता म्मत न्निघ्नन्तीच सवि शेषशिवाद्वैतं राद्धान्तयति ॥ तथाहि ॥

श्रु ॥ नाय मात्मा प्रवचनेन लभ्यो नमेधया नबहुना श्रुतेन । यमेवैष वृणुते तेनलभ्य स्तस्यैष आत्मा वृणुते तनूम्स्वामिति ॥ आत्मा = परमेश्वरः । प्रवचनादिभि र्लब्धु मशक्यः ॥

किंतु, एष परमेश्वरः यमेव वृणुते = अनुगृह्णाति । तेनैव परमेश्वरप्रसादभाजनेनैव जनेन लभ्यः ॥ परमेश्वरप्राप्तौ तत्प्रसाद म्मुक्त्वा प्रवचनादीनि साधनानि नोपयुज्यन्त इत्याशयः ॥

ननु, मुक्तेः परायत्तत्वे परमेश्वरानुग्रहस्याऽनिश्चितत्वेन विमुक्तिसिद्धि र्नैनिश्चितास्या दित्याशंक्याह ।। तस्येति ।। एष परमेश्वरः तस्य जनस्य । आत्मा = शरीरी ।। अतस्सः । स्वाम् = स्वीया न्तनूम् - शरीरभूतञ्जीवम् । वृणुते = प्रसीदति ।। स्वशरीरस्य स्वप्रेमास्पदत्वानुभवेन जीवस्यशरीरिभूतः परमेश्वर स्स्वशरीरभूत म्प्राणिन मवश्य मनुगृह्णात्येवे त्यर्थः ।। यथा ।।

लोके चक्रवर्तिन स्सन्निधि मधिजगमिषुर्जन स्स्वयत्नेन नाप्तुं शक्नुयात् । अथ तस्य प्रसादेनाऽचिरादेव समधिगच्छति । तथा साधकोपि परमेश्वरप्रसादेन तत्प्राप्तिरूपा म्मुक्ति मधिगच्छतीति हृदयम् ।। एतेन, येषा म्मुक्ति र्नपरमेश्वरप्राप्तिरूपा । अथ तत्सिद्धिर प्यात्मानात्मविचारसिद्धस्वानुभवज्ञानगोचराच । तेषा म्पक्ष श्श्रुते र्विपक्षएवेति विशद मेवे त्यलम् ।।

ननु, अय म्मन्त्र स्सूतसम्हितायाम् – ब्रह्मगीतासुसप्तमाध्यायविवरणे ।। एष विद्वान्, यमे वोक्तविध म्परमात्मानं वृणुते = प्राप्तु मिच्छति । तेन कारणेन, स परमात्मा लभ्यो नान्यो नसाधनान्तरेण, तस्य श्रवणमननादिभि स्तत्प्राप्ति म्प्रार्थयमानस्य विदुष आत्मा, अविद्यासंछन्नाम् स्वकीया न्तनुम् विवृणुते = प्रकाशयति । श्रवणादिसाधनजनितया विद्यया तदवरोधनिवृत्तौ तत्स्वरूप माविर्भवतीति उपनिषन्मार्गप्रवर्तकै र्माधवाचार्यै र्विवृत इतिचे देतद्विवरणम् स्वगोष्ठीनिष्ठानामेव तुष्टिदम् । अनन्तै रध्याहारै रतिक्लिष्टत्वात् । अतितरदुष्टत्वाच्च ।।

तथाहि , एषविद्वा नित्यनर्थएव । सर्वनाम्ना म्प्रक्कतपरामर्शक तया नाऽयमात्मेत्यादिनाप्रक्रान्तपरमात्मवाचकत्वा देतच्छब्दस्य । एष लभ्यइति समानविभक्तिकयो स्सामानाधिकरण्यवर्जनाच्च । अथ यमेवोक्त विथ म्परमात्मानम् वृणुते प्राप्तु मिच्छति । तेन कारणेनेत्यर्थो प्यसाधु रेव । यत्तदो र्नित्यसम्भन्धं विघटय्यवैय्यधिकरण्यावलम्बनात् ॥

अथाऽत्र यद्वदन्ति पांचरात्रमात्रप्रवणाः । तद्विष्णोः परम म्पदमिति विष्णोःस्थानस्य वैकुण्ठस्य प्राप्यत्व मनयाम्नातमिति । त त्तुच्छम् ॥ तत्ते पदं संग्रहेण ब्रवीमीत्यादिना व्यवहारेण पदशब्दस्य ब्रह्मवाचकतयास्थानवाचकत्वाभावात् । उभयनिर्देशे पंचमीनिर्देशो बली यानिति न्यायेन विष्णोः परमत्वश्रवणेन ब्रह्मणो नारायणा दन्यत्वस्याऽ धिकत्वस्यचाऽवगमेन शिवस्यैव ब्रह्मत्वसिद्धेश्च ॥

किंच , ईशानश्रुत्या अस्या श्शिवैकान्तिकत्व मवगम्यते । यत्तु – अत्र - मध्ये वामन मासीनमिति श्रुतेन विष्णुवाचिना वामन शब्देनाऽत्र निर्णयो विवक्षितइति तन्न , वामनशब्दस्य सामान्यतो विष्णुनामत्वाभावा , द्विशेषतो मन्त्रप्रतिपाद्यहार्दनामत्वाभावाच्च । उपे न्द्रावतारे विशेषत स्तस्य नामत्वेपि प्रकृते तदर्थग्रहणा नपेक्षणात् । ह्रस्वत्वसामान्यशक्त्यैव तन्नामत्वेन प्रयोगोपपत्तेः । विशिष्य तत्र शक्ति कल्पनायोगात् । तत्कल्पकस्याभियुक्तनामकोशादे रभावात् , कथ ञ्चि त्कल्पनेपि प्रकृते परस्परसन्निहितप्राणापानमध्यवर्तित्वोक्त्या ह्रस्वत्वरूढेरे वोन्मेषणा द्रूढ्यन्तरानुन्मेषाच्च । तस्मादंगुष्ठमात्रमन्त्रगतेन प्रसिद्ध तरशिवनामरूढिके नेशानशब्देनैवाऽत्र निर्णयो विवक्षित इत्यल मधिकेन ॥

एव म्प्रश्नोपनिषदपि शिवाद्वैतसाधिकैव ॥

तथाहि – श्रु ॥ भगव न्कुतोहवा इमाः प्रजाः प्रजायन्तइति ॥ इहैवाऽन्तश्शरीरे सोम्य सपुरुषइति ॥ सईक्षांचकार । सप्राण मसृजत इत्यादिना ॥ ब्रह्मण स्सर्वान्तर्यामित्वेक्षापूर्वकजगत्स्रष्टृत्वश्रवणेन सृष्टे स्तात्विकत्वावगमात् ॥

## मुण्डकोपनिषद्विचारः

त था मुण्डकोपनिषदपि सविशेषशिवाद्वैतप्रतिपादनपरैव ॥

तथाहि ॥ श्रु ॥ यथोर्णनाभि स्सृजते गृह्णतेच । यथा पृथिव्या मोषधय स्सम्भवन्ति । यथा सतः पुरुषा त्केशलोमानि । तथाक्षरा त्सम्भ वतीह विश्वम् ॥ इत्यादिना सृष्टे र्यथार्थ त्व मवगम्यते । अभिन्ननिमित्तो पादानत्वपक्षए वोर्णनाभि दृष्टांत स्समञ्जसो भवति । नहि कार्यस्य मिथ्यात्वविवक्षायाम् केवलनिमित्तत्वादिविषयेवा चोद्यपरिहारौ सामञ्जस्य माप्नुयाताम् ॥

किंच , सृष्टे रतात्विकत्वे यथापृथिव्या मोषधय स्सम्भवन्ती त्यादयो दृष्टान्ता नोपपद्येरन् । यदि भगवत्या श्रुतेस्सृष्टे मिथ्यात्व मिष्येत । तर्हि साकथम् रज्जुसर्पमरुमरीचिकाशुक्तिरौप्यादिषु बहुषु परैः प्रदर्श्य मानेषु दृष्टान्ते ष्वेकंवा नोपदिशेत् । तस्मा देषा श्रुतिः परेषाम् प्रतिपक्षैवेति युक्तम् ॥

अपिच , द्वा सुपर्णा सयुजा सखाया समानं वृक्ष म्परिषस्व जाते । तयोरन्यः पिप्पलम् स्वाद्वत्त्यनश्न न्नन्योऽभिचाकशीतीति मन्त्रेण

जीवेशयो र्वस्तुसिद्ध मभेद मुपदिशन्ती श्रुतीना ञ्जीवब्रह्मैक्यएव तात्पर्य मिति पक्ष मप्याक्षिपतीति व्यक्तम् ॥

नच , द्वासुपर्णेतिमन्त्रोऽन्तःकरणजीवपरइति वाच्यम् । अनेन मन्त्रेण तुल्यार्थकतया प्रत्यभिज्ञायमाने । समाने वृक्षे पुरुषो निमग्नइ त्यनन्तरमन्त्रे जीवपरमात्मनोः प्रतिपन्नत्वेनास्य मन्त्रस्य तदविरुद्धार्थ कत्वस्याऽवश्यत्वात् ॥

तथाहि - समानं वृक्ष म्परिषस्वजाते । समाने वृक्षे पुरुषो निमग्नइति तयो रैकार्थ्यं म्प्रतीयते । समाने वृक्षइति मन्त्रेच पुरुषो जीवः अन्तःकरणस्य पुरुषपदवाच्यत्वायोगात् । शोचति मुह्यमानः । पश्यति वीतशोकइति पदयो रस्वारस्यप्रसङ्गाच्च ॥

ननु , पैङ्गिरहस्यब्राह्मणेऽय म्मन्त्रोन्तःकरणजीवपरतया व्याख्या तः । तथाहि , तयो रन्यः पिप्पलं स्वाद्वत्तीति सत्वं । अनश्न न्नन्योऽभिचाकशीतीतिज्ञः । तावेतौ सत्वक्षेत्रज्ञाविति । स्वाद्वत्तीत्यन्तेन सत्त्व मुक्तम् । अभिचाकशीतीत्यन्तेन वाक्येनाऽनश्नन्नन्यो ज्ञइति क्षेत्र ज्ञोऽभिपश्यती त्युक्तमिति व्याख्यातत्व मवगम्यते ॥

नच , सत्वशब्दो जीवपरः । क्षेत्रज्ञशब्दः परमात्मपरइति वाच्यम् । सत्वक्षेत्रज्ञशब्दयो रन्तःकरणजीवपरतया प्रसिद्धत्वात् ॥ तदेत त्सत्वम् येन स्वप्न म्पश्यति । अथयोऽयं शारीर उपद्रष्टा सक्षे त्रज्ञः । तावेतौ सत्वक्षेत्रज्ञाविति सत्वक्षेत्रज्ञ शब्दयो रन्तःकरणजीवपर त्वेन तत्रैव व्याख्यातत्वाच्च ॥ इतिचेन्न , पैङ्गिरहस्यब्राह्मणस्यापि जीव परमेश्वरपरत्वात् ॥

तथाहि - सत्वम् बद्धजीवः । द्रव्यासुव्यवसायेषु सत्व मस्त्रीतु जन्तुष्विति नैघण्टिकपाठा त्सत्वशब्दस्य जीवपरत्वावगतेः । क्षेत्रज्ञशब्द श्चात्र परमात्मपरः । अर्थान्तरप्रसिद्धाकाशप्राणादिशब्दव दर्थानुपपत्या परमात्मपरत्वोपपत्तेः । येन स्वप्न म्पश्यतीत्यत्र येनेतीत्थम्भावे तृतीया । येन विशिष्टः परमात्मा स्वप्न म्पश्यतीत्युच्यते । ततश्च , काठिन्यवा न्योबिभर्तीति पृथिवीद्वारा काठिन्यवत् स्वप्नद्रष्टृत्व ञ्जीवात्मद्वारापरमात्म विशेषण म्भवतीति नविरोधः । शारीरशब्दश्च तस्यैषएव शारीरआत्मे तिवत् स्वव्यतिरिक्तसमस्तचिदचिद्वस्तुशरीरके परमात्म न्युपपद्यते । उपद्रष्टेति निरुपाधिकद्रष्टृत्वंच सर्वज्ञस्य तस्यैवोपपद्यते । अतो द्वासु पर्णेतिमन्त्रो जीवपरमात्मपरइ त्यलम् ॥

ननु , न्यायरक्षामणौ द्युभ्वाद्यधिकरणे पैङ्गिरहस्यब्राह्मणेन साकम् द्वासुपर्णेत्यादिमन्त्रोऽन्तःकरणशुद्धजीवप्रतिपादनपरतया श्रीमद्भि रप्पयमखिवरैः प्रसाधितः कथ मनयो र्जीवेश्वर परत्व मूरीकार्य मितिचे त्सत्यम् । यद्यपि तै स्तथाप्रसाधित स्तथापि सोर्थ स्सूत्रविरोधा दनु पादेयएव ॥

तथाहि , द्युभ्वाद्यायतनम् स्वशब्दादि त्यधिकरणे । यस्मि न्द्यौः पृथिवी चान्तरिक्ष मोतम्मनइत्यादिमुण्डकोपनिषन्निगदितम् द्युभ्वाद्या धारत्वम् —सू॥ मुक्तोपसृप्यव्यपदेशादिति परमेश्वरे निर्धार्य नानु मान मतशब्दादिति प्रधाने निषिध्य – प्राणभृच्चेत्यारभ्य - स्थित्यदना भ्यामित्यन्तै स्सूत्रै र्जीवात्मन्यपि प्रतिषेधितम् । तत्रहि , स्थित्यदना भ्यांचेतिसूत्रेण द्वासुपर्णेत्यादिमन्त्रं विषयतया परिगृह्य प्रकृतमन्त्रप्रति

पादिताभ्या न्तयो रन्यः पिप्पलगूम् स्वाद्व त्त्यनश्न न्नन्योऽभिचाकशीतीति स्थित्यदनाभ्या ञ्जीवा दर्थान्तरभूतस्य परमेश्वरस्यैव द्युभ्वाद्याधारत्वम् राद्धान्तितम् ॥

तद्धि द्वासुपर्णेत्यादिमन्त्रस्यान्तः करणजीवपरत्वे नोपपद्येत ॥

तस्मा त्परपरिगृहीतस्य प्रकृतमन्त्रार्थस्य वैयासिकसूत्रविप्रतिपिद्धत्वेन तेनप्रसाधनेन स्वमतेश्रुत्यसांगत्यमेवप्रकाशितमित्यल मधिकेन ॥

यत्त्वत्रपरैः यदापिपैङ्ग्युपनिषत्कृतेनव्याख्यानेनाऽस्यामृचि सत्व क्षेत्रज्ञावुच्येते । तदापिनविरोधः कश्चित् । कथम् । प्राणभृद्धीहघटादि छिद्रव त्सत्वाद्युपाध्यभिमानित्वेन प्रतिशरीरम् गृह्यमाणो द्युभ्वाद्यायतन न्नभवतीति । त दसङ्गतम् । घटादिच्छिद्रतुल्यतया इष्यमाणे प्राणभृति द्युभ्वाद्यायतनत्वशङ्कांया अनुन्मत्तस्याऽ प्राप्तेः ॥

## मांडूक्य विचारः ।

ननु, चरमायां मुक्तिकोपनिषदि सकलोपनिषत्सारो माण्डूक्ये वर्ततइति कीर्तितम् । माण्डूक्योपनिषच्च केवलाद्वैतमे वोपदिशति ॥ तथाहि ॥

अय मात्माब्रह्मेति जीवब्रह्मैक्य म्प्रतिज्ञाय सोय मात्माचतुष्पा दिति जाग्रत्स्वप्नसुषुप्तितुरीयरूपासु चतुसृष्व प्यवस्थासु विश्वादिरूपेण ब्रह्मणएव साक्षिरूपेणाऽवस्थान न्निरूप्य अवसाने शिव मद्वैत ञ्चतुर्थ म्मन्यन्ते सआत्मा सविज्ञेयइत्यनेन जीवाभिन्नस्यैव ब्रह्मणो विज्ञेयत्व मुप दिशतीतिचेत् ॥

अहो महदन्तर मवाच्योदीच्ययोरिव भवदीयवैदिकयोः पथो स्तथाच, जीवब्रम्हैक्ये नक्वचिदपि श्रुतेस्तात्पर्यम् । किन्तुब्रह्मणस्सर्वात्मत्व प्रदर्शनएव । यथाछान्दोग्ये । श्रु ।। ऐतदात्म्य मिदꣳ सर्वमितिप्रतिज्ञा तस्य ब्रह्मसार्वात्म्यस्य सामान्यस्य तत्वमसीति विशेषेण समर्थनम्।। यथाच ।। बृहदारण्यके । यःसर्वेषुभूतेषुतिष्ठन्नित्यादिना प्रतिज्ञातस्य तस्यैव सामान्यस्य योविज्ञाने तिष्ठन्निति विशेषेण समर्थनम्। तथैव प्रकृतायामपि सर्वह्येतद्ब्रह्मेति प्रतिज्ञातस्य - तस्यैव अय मात्माब्रह्मेति विशेषेण समर्थनमिति व्यक्तमेव ।।

अतएव ।। ईशावास्य मिदꣳ सर्वम् य त्किंचि ज्जगत्यामिति , अन्तः प्रविष्ट श्शास्ता जनानामिति । तिलेषु तैल न्दधिनीव सर्पि राप स्स्रोत स्स्वरणीषु चाग्निरित्यादिना परमेश्वरस्य सर्वात्मत्व मीशाद्या अवि शेषेण वर्णयन्ति ।। नहि निगमान्ताः प्रज्ञान म्ब्रह्मेत्यादिना जीवमेव ब्रह्मोपदिशन्ति । किन्तु कम्ब्रह्म खम्ब्रह्मेत्यादिना सर्वस्यापि ब्रह्मात्मकता मुपदिशन्ति ।।

नखलु ।। अय मात्मा ब्रह्मेत्यादीनां वाक्याना ञ्जीवब्रह्मैक्ये तात्पर्यकल्पनंसमञ्जसम् । जीवब्रह्मभेदस्यैव बहुश्रुति तात्पर्यसिद्धत्वेन तद्विरुद्धत्वात् । तत्वंच भेदनिष्कर्षे उपपादितमितिनेह । नापिजीवब्रह्मै क्यविज्ञा.स्यक्वचिदपिमुक्तिहेतुत्वम् श्रुतम् ।।

किंतु , ज्ञात्वा शिवम् शान्ति मत्यन्तमेति । आत्मान मन्विच्छ गुहा म्प्रविष्टम् । आत्मान मरणिम् कृत्वा प्रणवंचोत्तरारणिम् ध्याननिर्मथनाभ्यासा न्माय न्दहति पण्डितः । ध्यात्वा मुनिर्गच्छतिभूत

योनि. मित्यादिना उपासनारूपस्यैव शिवज्ञानस्याऽभ्यासेन मुक्तिहेतुत्व माम्नायते ॥ प्रस्तुत। श्रु ॥जुष्टं यदापश्य त्यन्यमीश मस्यमहिमान मिति वीतशोकः। पृथगात्मानं प्रेरितारंच मत्वाजुष्ट स्ततस्तेनामृत त्वमेतीत्यादिना जीवा द्विविक्तस्यैव परमेश्वरस्य ज्ञानेने त्यभ्यासेनाम्ना यते । तस्मा ज्जीवब्रह्मैक्यमज्ञानमेवनभवति बहुश्रुतिविप्रतिषेधादिति सिद्धम् ॥

ननु— तर्हि - प्रकृते - सोऽय मात्मा चतुष्पादिति परमेश्व रस्यावस्थात्रितयवर्तित्वश्रवण क्किमभिप्रायमितिचेत् । उच्यते । इदमपि सर्वं ह्येत ब्रह्मेत्यादौ प्रतिज्ञातस्य ब्रह्मसार्वात्म्यस्यो पपादकमेव ॥

तथाच । परमेश्वरो विश्वादिरूपेणाऽवस्थात्रितयेपि जीवस्य प्रेर कइ त्यर्थएवास्य तात्पर्य मवगम्यते ॥

एवंच । अवस्थात्रितयेपि जीवस्य प्रेरकत्वेनाऽविभक्ततया स्थितमपि तुरीये जीवा द्विविक्तत्वेन सुविज्ञेयस्यैव ब्रह्मणः ज्ञेयत्व माम्नात मिति नैतावता जीवब्रह्मैक्यस्योपपत्ति स्सम्भवति ॥

अत्र , एष सर्वेश्वरइति सर्वेश्वरत्वादिलिङ्गात् शिव मद्वैतमि त्यसाधारणाभिधानश्रुतिबलाच्च इय मुपनिष च्छिवाद्वैतप्रतिपादन परैवे त्यल मधिकेन ॥

ननु , गौडपादीयमाण्डूक्यकारिकासु अस्याः केवलाद्वैतपरत्व म्प्रदर्शितमितिचेन्न । तासाम्बौद्धपथानु बन्धित्वेन वैदिकाना मनुपादे यत्वात् ॥

# तैत्तिरीयोपनिषद्विचारः।

---

## एवन्तैत्तिरीयोपनिषदपि शिवाद्वैतपरैव ॥

तथाहि, ब्रह्मविदाप्नोति परम् ॥ ब्रह्मवित् = परमेश्वरोपासकः। परम्परमेश्वर माप्नोतीति प्राप्तृप्राप्तव्ययो र्जीवेशयो र्भेद एव कण्ठरवे णाम्नातः ॥ अयंहि केवलाद्वैतिनस्तञ्चच्छते ॥

ननु, ब्रह्मवित् = ब्रह्मानुभववान्। पर माप्नोतीत्यनेन स्वयमेव ब्रह्म भवतीति निरूपितम्: नतु भेदः। ब्रह्मविद्ब्रह्मैव भवतीति वाक्यान्तरैकार्थ्या दितिचेत्त दपेशलं ॥ जीवपरमात्मनो र्भेदस्य बहुश्रुतिसम्प्रतिपन्नत्वेन स्वतोविविक्तयो स्तयोर्ज्ञाने नैक्यासम्भवात् ॥ ततस्य विदधातो रुपासनारूपज्ञानपरत्वसम्प्रतिपत्ते रनुभवज्ञानपरत्व मनुचितम् ॥

तथांच। श्रु ॥ अग्नीषोमीय म्पशु मालभेतेत्यत्र श्रुतस्य पशुशब्दस्य - श्रु ॥ छागस्य वपायामेदसइति मन्त्रवर्णेन पशुविशेषरूपछागपरत्वं स्थिरीकृतं। सू ॥ छागोवामन्त्रवर्णादिति षष्ठान्त्याधिकरणे। तेनैवन्यायेन ज्ञानसामान्य वाचिनो विदधातो रुपासनारूपज्ञानविशेषपरत्व मेव युक्तम् ॥

नच, उपासनारूपज्ञानविशेषस्य क्वचिद प्यश्रुतत्वेन प्रकृते ज्ञानविशेषपरत्व मनुपपन्नमिति वाच्यम्। विदुपास्त्यो र्वेदान्ते ष्वव्यतिरेकेण प्रयोगस्य श्रूयमाणत्वात्। तथाहि क्वचि द्विदिनोपक्रम्य उपासिना

उपसम्हरति यथा । श्रु ॥ यस्तद्वेद यत्सवेद समयैतदुक्तः । छा॥ ४।१। ४॥ इत्यत्र ॥ नुम एता म्भगवो देवतांशाधि । या न्देवता मुपास्से ॥ ४।२।२॥

इति ॥ क्वचि च्चोपासि नोपक्रम्य विदि नोपसंहरति॥ यथा- मनोब्रह्मे त्युपासीत छा ॥ ३।१८।१॥ इत्यत्र ॥ भातिच तपतिच कीर्त्या यशसा ब्रह्मवर्चसेन, य एवं वेद । छा ॥ ३।१८।३ ॥

इति , यो न्यान्देवता मुपास्ते अन्योसा वन्योह मस्मीतिनसवेद यथा पशुरि त्यत्रच ।छा। तस्मा ज्ञानसामान्यवांचिनो विदधातो ज्ञानविशेष रूपोपासनापरत्व मवार्यम् ॥

ननु , यत्र विद्युपास्त्यो रव्यतिरेकेण प्रयोगो दृश्यते तत्र तादृशार्थ ग्रहणेपि प्रकृत उपास्ते रश्रवणा त्तत्परत्व मनुचितमितिचेन्न । वेदान्तेष्वभ्यासेनप्रयुक्ततया तात्पर्यसिद्धतया निर्णीत स्याऽर्थस्य प्रकृते त्यागायोगात् । प्रकृतश्रताव प्यन्नम्ब्रह्मोपासतइति । ब्रह्म ज्येष्ठ मुपासत इतिच उपास्ते श्श्रूयमाणत्वाच्च ॥

अपिच , ब्रह्मविदिति विदधातुना निगदितम् ज्ञान मुपासना रूप मेवेति वाक्यशेषात्सिध्यति । तथाच॥ अत्र ब्रह्मवि दाप्नोति परमिति परमेश्वरसायुज्यरूप परममुक्ति न्तत्साधनत्वेन परमेश्वरोपासनञ्च प्रतिज्ञाय तदुपयोगितया , सत्यं ज्ञान मनन्त मित्युपास्य ब्रह्मरूपस्य योवेद निहितं गुहायामित्युपासनास्थानस्य । सोश्नुत इति तत्फलस्य चाम्नातत्वात् ॥



अतएव , भगवता भाष्यकारेण । ब्रह्मवि दाप्नोतिपरमि

त्यादिषु ब्रह्मस्वरूपोपासनातत्फलादिक मुपदिश्यते ॥ अन्यथा ॥ सत्यत्वादि विशिष्टब्रह्मणासह कथम् सकलकामावाप्तिः फल न्तादृशब्रह्म साक्षात्करणञ्च सिध्यती त्युक्तम् समन्वयाधिकरणे ॥ ततएवच ॥ श्रु ॥ ध्यात्वा मुनिर्गच्छति भूतयोनिम्। ज्ञाननिर्मथनादेव पाश न्दहति पण्डितः शम्भु राकाशमध्ये ध्येयः। प्राचीनयोग्योपास्वेत्यादीनि चौपनिषदानि वचांसि सार्थकानि भवन्ति ॥

किंच, अत्रपरमेश्वरप्राप्तिसाधनतयाश्रुतं ज्ञानमुपासनारूपमेवेत्य वश्यमेष्टव्यम्। हार्दानुगृहीतश्शताधिकयेति परमेश्वरानुग्रह न्तत्प्राप्ति साध नतया निबध्नत आचार्यस्य तदनुग्रह निदान उपासनारूपज्ञानएव तात्पर्यस्यावगम्यमानत्वात् ॥

एतेन, यद्विदे रनुभवपरत्वमुक्तं तद्गर्भस्रावेणगतं ॥ ब्रह्मवल्लीच परेषा म्मतं समूलघातं हन्ति ॥ तथाहि। आदावेव। आप्नोति परमिति जीवेशयोः प्राप्तृप्राप्तव्यतयाभेद न्निर्धारयन्ती तयो रैक्य न्निरस्यतीति व्यक्तम् ॥

ततश्च – ब्रह्मस्वरूपोपदेशावसरे सत्यं ज्ञान मनन्तमिति ब्रुवती ज्ञानपदेन जडरूपा ज्जगतोऽनन्तपदेन जीवा दणोश्च ब्रह्मणोमह द्वैलक्षण्य मावेदयन्ती तेन सजातीय विजातीययो श्चिदचितो र्ब्रह्मणश्च स्वाभाविक म्भेद ञ्जगत स्सत्यत्वञ्च निवेदयन्ती जगतो मिथ्यात्व ञ्जीवेशयो रभेदम् ब्रह्मण स्सजातीयविजातीयादिभेदराहित्यञ्च निराकरोति ॥ तथा - भीषास्मा द्वातः पवतइत्यादिनाच परमेश्वरस्य प्रशासकत्वं सहज मुपदि शन्ती तस्य मायाकल्पितत्व मभिमन्तृणा म्मत मुत्क्षिपतीतिविस्पष्टमेव ॥

किंच, सोऽश्नुते सर्वान्कामा न्सहब्रह्मणा विपश्चितेति वाक्येन ब्रह्मणासह सकलकामोपभोगरूपां सायुज्यात्मकपरममुक्तिं निवेद यन्ती मुक्तावस्थायामपि जीवब्रह्मणो र्भेदम् स्फुटीकुर्वन्तीच जीवब्रह्मणो रभेदं पारमार्थिकं निगदता म्मतं समूल मुन्मूलयतीति विशदमेव ॥

ननु, सोऽश्नुतइति मुक्तावस्थायां नभेदो निगद्यते ॥

तथाहि । सः = एवम् ब्रह्मविजानन् । किमित्याह - अश्नुते = भुङ्क्ते, सर्वा न्निरवशिष्टान् कामान् काम्यभोगा नित्यर्थः । किमस्मदा दिवत् पुत्रस्वर्गादीन् पर्यायेण ? सह = युगपत् - एकक्षणोपारूढानेव । एकयोपलब्ध्या सवितृप्रकाशव न्नित्यया ब्रह्मस्वरूपाव्यतिरिक्तया - या मवोचाम सत्यं ज्ञानमिति । एत त्तदुच्यते ब्रह्मणासहेति, ब्रह्मभूतो विद्वान् ब्रह्मस्वरूपेणैव सर्वा न्कामा न्सहाश्नुत इति । तस्मा न्नभेदो मुक्तावस्थायां निगद्यतइति चेदशिक्षितत्रासनमेतत् ॥ अस्यार्थस्य पाणि नीयोपरुद्धत्वेन दुष्टत्वात् ॥

तथाहि, सू ॥ सहयुक्तेऽप्रधानइतिलक्षणानुरोधेन तत्र सह शब्दस्य श्रूयमाणत्वेन सहशब्दतृतीययोस्सम्बन्धविघटनपूर्वकं परनिगदि तोऽर्थः पाणिनीय प्रतिरुद्धइति प्रसिद्धमेव । नचाऽत्र सहशब्दोऽन्यार्थ इति वाच्यं । सहयुक्तेऽप्रधानइिति सूत्रे तद्व्याख्यानेषुच सहशब्दार्थ त्वेन महर्षिभि रनङ्गीकृतत्वेन भवदुक्तस्याऽर्थस्याऽनर्थत्वावधारणात् ।

किंच । तादृशार्थस्य क्वचि दुपलम्भेपि तद्योगे ब्रह्मणेति तृतीयाया असङ्गतत्वाच्च । नच । ब्रह्मणा इत्यस्य ब्रह्मस्वरूपेणे त्यर्थ इति वाच्यम् । तस्य लाक्षणिकत्वेन दुष्टत्वात् । ब्रह्मशब्दविशेषणे विप

श्चितेति तृतीयाया असङ्गतत्वाच्च। तथाच। विपश्चिता = मेधाविनेति परै र्व्याख्यातम्। अत्र मेधावी, किमधिकारी? उतब्रह्म? अथवाब्रह्म स्वरूपम्? नप्रथमः। सद्धि त्यधिकारिणः प्रथमान्तत यादौ निर्दिष्ट त्वेन तत्र तृतीयाया अनन्वयात्। नद्वितीयः। तस्यविमते प्रकृतवाक्या ग्रथितत्वात्। नापितृतीयः। ब्रह्मस्वरूपंमेधावीति वाक्य स्योपहा स्यत्वात्। ब्रह्मस्वरूपस्य निर्विशेषत्वरूपस्वसिद्धान्तहानेश्च। अन्यच्च। पराभ्युपगताऽशरीरत्वरूपमोक्षस्य निर्विशेषत्वेन तस्य भोगा नुभवितृत्व मसम्भावितं॥ अपरञ्च, कामानिति बहुवचनस्य - सर्वानिति विशे षणेनच प्रतिपाद्यमानविशेषाणां निर्विशेषैकत्वपक्षेऽसाङ्गत्य न्नित्यम्॥ इदंच। परै रकर्त्रात्मप्रतिपत्तेरेव मोक्षत्वेन सिद्धान्तिततया, अश्नुत इति कर्तृत्वश्रवण मत्यन्तविरुद्धम्॥

एतच्च। इदंविवरणं वैयासिकसूत्रविरुद्धम्। तथाच। सू॥ भोगमात्रसाम्यलिङ्गाच्च। इति सूत्रेण मुक्तस्य भोगमात्रे परमेश्वरेण साम्यं निर्धारितम्। अतएव परैरपि - भोगमात्रेतिसूत्रम् सगुणपर मेवेति सूत्रभाष्येऽङ्गीकृतमेव। एवम्! सोऽश्नुतइति विषयवाक्यार्थनिर्धा रणप्रवृत्त मधिकरण मवशत स्सगुणपरतया स्वेनैवाङ्गीकृतत्वेन प्रकृते तद्विषयवाक्यस्य निर्गुणपरतया कृतं विवरणम्। वैयासिकसूत्रविरोधेन सह स्ववचनविरोधञ्च व्यनक्ती त्यलं परेषामुपरि दोषपाषाणाभिवर्षणेन॥

ननु — इद म्प्रकरण मध्यारोपापवादभ्यां निष्प्रपंचब्रह्मस्वरूप निष्कर्षार्थम्। तथाहि - उपक्रमेतावत्। ब्रह्मवि दाप्नोतिपरमिति ब्रह्म विद स्तद्भावापत्तिलक्षणा मुक्ति रुक्ता। नतुतत्प्राप्ति लक्षणा। बृहदा

रण्यके । सयदाह असतो मासद्गमयेति मृत्युर्वा असत् सदमृतम् मृत्यो र्माऽमृतं गमय अमृतं माकुर्वित्ये वैतदाह [ बृ- १- ३ ] इति सच्छ ब्दोक्तामृतावाप्त्यर्थत्वश्रुते रमृताभेदाभिव्यक्त्यर्थतया व्याख्यातत्वेन मुक्ति फलप्रतिपादकेषु वाक्येषु ब्रह्मावाप्तिश्रवणानां तद्भावापत्तिपरत्वावगमात्। ततश्च किंतत् ब्रह्म ? किंतद्वेदनम्कीदृशीच तद्भावापत्तेः पुरुषार्थरूपता इत्याकांक्षायां । सत्यं ज्ञानमनन्तम् ब्रह्मेति स्वरूपलक्षणेन ब्रह्मस्वरूपं निर्धार्य यो वेद निहितं गुहायामिति । तत् ब्रह्म जीवस्वरूपेण हृदय गुहायां निवेशितं जीवाभिन्नं योवेदेति तद्वेदनं जीवाभेदविषयमिति प्रदर्श्य । तत्फलभूताया स्तद्भावापत्ते र्निरतिशयपुरुषार्थरूपत्वं । सोऽश्नुत इत्यादिना प्रतिपादितम् । तत्र ' ब्रह्मणे तीत्थम्भूतलक्षणे तृतीया । तथाच । ब्रह्मणा रूपेण सर्वान् कामा न्सह = युगप दश्नुते । सर्वेषा मैहिकामुष्मिकाणां काम्यानाम् क्रमिके णोपभोगेन याव त्सुख मभिव्यंग्यं तत्सर्वम् ब्रह्मसुखाम्बुधिकणिकायमानमिति विद्ययाऽभिव्यक्तं निरतिशयम् ब्रह्मसुखाम्बुधि मनुभवतीत्यर्थः । नतु ब्रह्मणासह सर्वा न्विषयभोगा नश्नुतइ त्यर्थः । ब्रह्मणासहे त्यन्वयस्य । सोऽश्नुते सर्वा न्कामा न्सहेत्य त्राऽध्ययनसम्प्रदायप्राप्तवाक्यविच्छेदाननुगुणत्वात् । सहार्थतृतीयया ब्रह्म णः कर्मसाहित्ये कर्तृसाहित्येवा विवक्षिते भोग्यविषयापेक्षया भोक्तृजीवा पेक्षयावा अप्राधान्यप्रसङ्गेन ब्रह्मणो निरतिशयपुरुषार्थत्वस्य निरतिशयैश्व र्यस्यवा हानिप्रसङ्गाच्चेति श्री दीक्षितेन्द्रैः । न्यायरक्षामणा वुक्तमितिचे त्सत्यमुक्तम् । तदपि विमृश्यतु नोक्तम् ॥ तथाहि ॥ अत्रयत्मुक्तिफल प्रतिपादकवाक्येषु ब्रह्मावाप्तिश्रवणाना न्तद्भावापत्तिपरत्व म्प्रसाधित न्तत्सर्व [illegible] मिति नेह्युन ॥

ततश्च, योवेदनिहितंगुहाया मित्यस्य – तद्ब्रह्मजीवस्वरूपेण हृदयगुहाया न्निवेशितं जीवाभिन्नं योवेदेति तद्वेदन ञ्जीवाभेदविषय मितिच यदुक्तम् तदपि नयुक्तम् । बहुश्रुत्यन्तरप्रतिरुद्धत्वा दध्याहार बाहुल्यकलुषितत्वाच्च । तथाहि । श्रु ॥ द्वा सुपर्णा सयुजा । ऋत म्पिबन्तौ । इत्यादिषु बहुषु श्रुतिषु ब्रह्मणो जीवाद्विविक्तत्वेन हृदय गुहानिहितत्व माम्नायते । ब्रह्मणएव जीवस्वरूपेण निवेशनवर्णने कथन्त न्नविरुद्ध्येत । किंच, अनेन जीवे नात्मनाऽनुप्रविश्येति ब्रह्मणो जीवेनसहाऽनुप्रवेश श्रयते । ब्रह्मणएव जीवभावेन प्रवेशे अन्वित्युपसर्गोऽन र्थकएव स्यात् । तस्मा त्परपरिगृहीतोर्थ श्श्रुतिविप्रतिषिद्धएव ॥

परस्ताच्च, तत्रब्रह्मणे तीत्थम्भूतलक्षणे तृतीयेतिच यदुक्त न्तदप्यशिक्षितस्यचक्षुषि धूळिप्रक्षेपकल्पं ॥ प्रकृते सहपदस्य तद्योगे तृतीयायाश्च श्रूयमाणतया सहार्थयोगतृतीयाया स्स्वरसत्वेनाऽत्र इत्थ म्भूतलक्षणाश्रयणस्य क्लिष्टत्वात् । उपपदविभक्ते स्सहयोगतृतीयायाः प्रति पदोक्तत्वेन इत्थम्भूतलक्षणंतृतीयाश्रयणस्य लक्षणप्रतिपदोक्तयोः प्रतिप दोक्तस्यैव ग्रहणमिति वैयाकरणपरिभाषाविरुद्धत्वाच्च ॥ अत्रलक्ष्यलक्षण भावस्यैवाऽविवक्षितत्वेन इत्थम्भूतलक्षणे तृतीयायाएवाऽप्राप्तेश्च ॥ ततोपि यदुक्तम् - ब्रह्मणासहे त्यन्वयस्य सोश्नुते सर्वा न्कामांत्सहे त्यत्राऽध्य यनसम्प्रदायप्राप्तवाक्यविच्छेदाननुगुणत्वादिति तद प्यसारम् । प्रकृते वाक्यविच्छेदस्य नियतवर्णपदसङ्ख्याप्रयुक्तत्वेनाऽर्थसमाप्ति प्रयुक्तत्वा भावात् । अन्यथा – प्रकृतायामेवनिषदि श्रु ॥ आवहन्तीवितन्वानेत्य त्रैववाक्यविच्छेदस्या ऽध्ययनसम्प्रदायप्राप्तत्वेन कुर्वाणेत्यत्र तदन्वयो

दुष्येत ॥ अतोपि यदुक्तम् । सहार्थतृतीयया ब्रह्मणः कर्मसाहित्ये कर्तृसाहित्येवा विवक्षिते भोग्यविषयापेक्षया भोक्तृजीवापेक्षयावा अप्राधान्यप्रसङ्गेन ब्रह्मणो निरतिशयपुरुषार्थत्वस्य निरतिशयैश्वर्यस्यवा हानिप्रसङ्गाच्चेति । तदपि श्रुत्युपालम्भरूपमेव । श्रुत्या विवक्षितार्थस्याऽगर्हणीयत्वात् । वक्तृविवक्षासिद्धाप्राधान्यस्य स्वतस्सिद्धब्रह्मप्राधान्यापनोदकत्वाभावात् । अन्यथा राज्ञास हायासी द्भृत्यइत्यत्र राज्ञः प्राधान्यं व्याहन्येत ॥ ततश्च । श्रु ॥ तस्माद्वा एतस्मा दात्मन आकाश स्सम्भूतः । आकाशा द्वायुरित्यादिना ब्रह्मणो जगत्कारणत्वरूपतटस्थलक्षणनिरूपणेन सप्रपंचत्व मुपदिशन्ती निष्प्रपंचत्ववाद मपवदतीति विशदम् ॥

ननु –– ब्रह्मणोलक्षण आनन्त्यान्तगतं वस्तुपरिच्छेदराहित्यं प्रपंचस्य प्रतिपन्नोपाधिगतनिषेध प्रतियोगित्वलक्षणमिथ्यात्वे नोपपादयितुम् ॥ आत्मन आकाशइत्यादिना ब्रह्मणो जगदुपादानत्व प्रतिपादनेन तत्र प्रपंचाध्यारोपः कृतः । ब्रह्मण उपादानत्वेपि सृष्टिनियमनादिषु निमित्तान्तरसद्भावे वस्तुपरिच्छेद स्स्यादिति शङ्कानिरासार्थम् , सोकामयतेति सृष्टौ भीषास्मा द्वातः पवतइति नियमनेपि निमित्तत्वं दर्शितम् । एव मारोपितस्य प्रपञ्चस्य यतो वाचो निवर्तन्तइ त्यत्राऽपवाद उपदिश्यते । अस्यहि मन्त्रस्याऽयमर्थः — यथा शुक्तिकाया मध्यस्तरजततादात्म्योल्लेखितया प्रवृत्तेन मनसासह ' रजत मिदमिति व्यवहारश्शुक्तित्वपर्यन्त मप्राप्य नेदं रजतमिति बाधेसति निवर्तते । एवम् ब्रह्मण्यध्यस्तप्रपंचतादात्म्योल्लेखितया सन्घट स्सन्पट इत्यादिप्रकारेण प्रवृत्तेनाऽन्तःकरणेनसह तत्र प्रवृत्ता घटपटादिशब्दाश्च प्यखण्डाकार

पर्यन्त मप्राप्य - अथात आदेशो नेतिनेतीत्यादिश्रौतबाधेसति निवर्तन्त इत्यप्पयदीक्षितेन्द्रैर्न्यायरक्षामणा वुक्तमितिचे दिदमप्याकाशमुष्टिहाननायते। अस्याऽभूतकल्पनस्य श्रुतिसूत्रविरुद्धत्वात् ॥

तथाहि — ब्रह्मणो देशकालपरिच्छेदरहितत्वमात्रे णैवाऽनन्त्यस्य विवक्षितत्वेन वस्तुपरिच्छेदराहित्यस्याऽनपेक्षणात्। तथाविधस्य वस्तुन श्शशविषाणायमानत्वेनाऽनुपलब्धेश्च। ब्रह्मण स्सर्वचिदचिद्वस्तुशरीरकतया सर्वप्रकारत्वा त्सर्ववस्तुपरिच्छेदराहित्यस्याऽस्मत्पक्षएव सुसिद्धत्वेन। प्रपंचमिथ्यात्वसाधनेनोपपादयितव्यत्वाभावात्। वस्त्वन्तरमिथ्यात्वसाधनेन वस्तुपरिच्छेदराहित्यस्याऽसिद्धेश्च ॥ वस्तुपरिच्छेदराहित्ये निमित्तान्तर निषेधस्यानुपपत्तेस्तेनवस्तुपरिच्छेदस्यैव सिद्धेश्च ॥

यदिच जगन्मिथ्यात्व मिष्येत श्रुतीनां तर्हि जग न्मिथ्येति चतुरक्षर्यैव सिद्धे तत्सिद्ध्यर्थम् आत्मनआकाशइत्यादिना प्रपञ्चस्याऽध्यारोपम्प्रदर्श्य। 'यतोवाचोनिवर्तन्तइति। अथात आदेशोनेतिनेतीतिच अपवादंनोपदिशेयः। अध्यारोपादिनिरूपणस्याऽनर्थकत्वात्। तस्मात्- आत्मनआकाशइत्यादिश्रुतीनाम्ब्रह्मणो ऽभिन्ननिमित्तोपादानजगत्कारणत्व प्रसाधनद्वारा - जगन्मिथ्यात्वप्रधानाद्यन्यकारणत्वकेवलनिमित्तत्वादिविमत निराकरणार्थत्वमेवसमंजसमितिनवक्तव्यम्बहु।

नच। यतो वाचोनिवर्तन्त इत्यनेन प्रपंचस्याऽपवाद उपदिश्यतइति वाच्यम् - पूर्वम् सैषानन्दस्यमीमां से त्यारभ्य आनन्दोत्कर्षवर्णनस्य प्रकृतत्वात्। आनन्दम् ब्रह्मणइति विशेष्यनिर्देशेनच ब्रह्मानन्देयत्ता विषयवाङ्मनसनिवृत्तिरेव परमार्थइति स्फुट मवगम्यमानत्वाच्च।

ननु , अथात आदेशो नेतिनेतीति श्रुतिवचनेन प्रपंचोऽपाद्यत इतिचेन्न । नेतिनेतीतिवाक्यस्य प्रपंचनिषेधपरत्वं प्रकृतैतावत्त्वाधिकरणविरुद्धमिति निगमान्तार्थनिष्कर्षे सविस्तर मुपपादितत्वात् ॥

ततश्च , सोऽकामयत वहुस्याम् प्रजायेयेति सतपोऽतप्यत स तप स्तप्त्वा इत्यादिना परमेश्वरस्य वहुभवनसङ्कल्पयितृत्वोपदेशेन सगुणत्वस्य इदगं् सर्व मसृजतेति सर्वस्य जगतः परमेश्वरसृष्टत्वेन सत्यत्वमेव नतुभ्रान्ति सिद्धतया मिथ्यात्वमिति परपक्षम् प्रतिक्षिपती त्यविवादम्. ननु , श्रु ॥ यदा ह्येवैष एतस्मि न्नुदर मन्तरं कुरुते । अथ तस्य भयम् भवतीति भेदं निषेध तीतीयं निषत् शुद्धाद्वैतपक्षस्याऽनुगुणेतिचे न्नैम् । यदीदम् वचनम् भेदनिषेधक मभविष्य त्तर्हि शुद्धाद्वैत मसाधयिष्यत् - तत्त्वमेवाऽसम्भवि । तथाहि - श्रु ॥ एष ह्येवानन्द याति । यदा ह्येवैष एतस्मि न्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभय म्प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवतीत्यनेन ध्यानरूपपरमेश्वरनिष्ठाया जननमरण प्रवाहरूप संसारभयरहितविमुक्तिसाधकत्व मभिधाय । अर मल्पम प्यन्तरंव्यवधानमुयः करोति तस्य संसारभयम् भवतीति निगदितम् । अतएव शिवपुराणे । य न्मुहूर्तं क्षणंवापि महादेवो नचिन्त्यते । सा हानि स्तन्महानर्थम् सा भ्रान्ति स्साच विक्रिया । वरं हुतवहज्वाला पञ्जरान्तर्व्यवस्थितिः । नसाम्बचिन्ता विरहसं स्थिति र्हिप्रशस्यते। इति। अहो अन्तरशब्दस्यानेकर्थकत्वलाभपारश्येन पूर्ववाक्यानुरोधोपि नादृतः परैः । पुरस्तात् परमेश्वरनिष्ठारूप प्रतिष्ठाम् साधयतोऽभयम् प्रतिज्ञाय - अन्तरं कुर्वतो भयमुपदिशन्त्या श्रुतेः पारमेश्वरनिष्ठाव्यवच्छेदएव तात्पर्यस्य समुचितत्वेन

—भेदनिषेधे नाल्पम प्यस्या विद्यते तात्पर्यमिति विशदमेव॥

एवञ्च, परमेश्वरोपासनाप्रतिपादकत्वात् - परमेश्वरसायुज्यमुक्ति निरूपकत्वात् - अभिन्ननिमित्तोपादानकारणत्वबोधनेन परमेशितु स्सप्र पञ्चत्वसगुणत्वनिर्णायकत्वाच्च इय मुपनिषत् शिवाद्वैतप्रतिष्ठापनपरैवेति सर्व मनवद्यम् ।

तथा, भृगुवल्ल्यपि - श्रु॥ यतोवा इमानिभूतानि जायन्त इत्यदिना परमेश्वरस्य सकलचराचरसृष्टिस्थितिलयकारणत्वरूपलक्षणलक्षि तत्वम् निगदन्ती तत्सृष्टत्वेन जगत स्सत्यत्वम् - सर्वकारणत्वेन ब्रह्मण स्सर्वशक्तिविशिष्टत्वं सिद्धान्तयन्तीच भ्रान्तिसिद्धत्वेन जगतो मिथ्या त्वम् ब्रह्मणोनिर्विशेषत्वञ्च साधयता म्मतं निराकरोतीतिविशदमेव ।

ननु, श्रु॥ अन्नम् ब्रह्मेति व्यजानादित्यादिना पञ्चकोशेभ्य आत्मानंविविच्य तमेव परमात्मान मावेदयन्ती शुद्धाद्वैतपक्षस्यैव साधि केतिचे न्मैवम् । तत्रविज्ञानशब्दे नाऽन्नमयादिकोशव्यतिरिक्त ञ्जीवात्मान न्निर्दिश्य तदन्तर्यामिण आनन्दस्यैव ब्रह्मत्वोपदेशेन जीवेश्वरयो श्शरीर शरी रिभावबोधकतयाऽस्या निषद श्शिवाद्वैतप्रतिपादकत्वानपायात् ॥

नचाऽत्र निगदितस्याऽऽनन्दस्य नब्रह्मत्व मभिमतमिति वाच्यम् । आनन्दमयाधिकरणे तस्यैव ब्रह्मत्वेन भगवता सूत्रकृता सिद्धान्तितत्वात्॥

एवम्, ऐतरेयोपनिषदपि शिवाद्वैतप्रति पादनपरैव । तथाहि श्रु॥ आत्मावा इद मेकए वाग्र आसी न्नान्य त्किञ्चन मिष त्सईक्षत लोकान्नुसृजाइत्यादिना ब्रह्मण स्सप्रपञ्चत्वादी न्निर्धारयन्ती निर्गुण ब्रह्मवाद न्निर्मूलयतीति व्यक्तमेव ॥

तथा , श्वेताश्वतरोपनिषदपि ॥

श्रु॥ ज्ञाज्ञौ द्वावजावीशानीशावित्यादिना जीवेश्वरभेदोपदेशात् । श्रु॥ मायान्तु प्रकृतिं विद्या न्मायिनन्तु महेश्वरम् ॥ तमीश्वराणाम्प रम म्महेश्वरम् । शिवएव केवलः । ज्ञात्वा शिवं सर्वभूतेषु गूढमित्या दिना शिवमहेश्वराद्यसाधारणानेकाभिधानश्रुतिभिश्च सविशेषशिवाद्वैतमेव राद्धान्तयती त्यलम् ॥

## छान्दोग्यविचारः ।

---

ए वं छान्दोग्योपनिषदपि शिवाद्वैतप्रतिपादनपरैव । तथाहि ॥ श्रु॥ ओमि त्येतदक्षर मुद्गीथ मुपासीतेत्यादिना ब्रह्मण उपासनाविधानेन उपासनाविधौतात्पर्यन्निषदांविवृण्वन्ती ब्रह्मण स्सागुण्य मावेदयन्तीच निर्गुणवाद न्निर्मूलयति । तथा तृतीयप्रपाठके सर्वं ङ्खल्विद म्ब्रह्म तज्जला निति शान्त उपासीतेति ब्रह्मण स्सप्रपञ्चत्वं सत्यसङ्कल्प आत्मा - सर्व कर्मा सर्वगन्ध स्सर्वरस इत्यनन्तमाङ्गल्य गुणरत्नाकरत्वञ्च ब्रह्मण स्समु पदिशन्ती निर्विशेषवादंनिश्शेषयति ॥

अपिच , चतुर्थप्रपाठके - जानश्रुतिवृत्तान्तेपि - नुम एता म्भगवो देवतां शाधि या न्देवता मुपास्सेइति प्रश्नेनवेदान्ताना मुपा सनाविधिपरत्व मावेदयन्ती शिवाद्वैत मुपोद्बलयति ॥ एव न्त त्तोपाख्या यते । जानश्रुतिः पौत्रायणः श्रद्धया बहुधनान्नप्रदः सर्वासु दिक्षु ग्राम नगर मार्गारण्य तीर्थादिषु पान्थाना मनाथानाच शीतवातातपवर्ष बाधा

निवार कान्नोदक शयनाच्छादनादि भोग्यजात सम्पूर्णा नावसधा न्निर्माप यांचकार ॥ तस्यधार्मिकप्रवरस्य कर्मभिः प्रक्षीणदुरितस्य ब्रह्मविविदिषा मुत्पादयितुं केचन महर्षयो हंसरूप मास्थाय निशायां हर्म्ये शयानस्य तस्योपरिपंक्तिमाबध्याजग्मुः । तेषामग्रेसरं हंसं भोभो भल्लाक्षेति विपरीत लक्षणया मन्दलोचनेति द्विवारं सम्बोध्य पृष्ठगामी कश्चिद्धंस उवाच जानश्रुते रन्नदानादिप्रभावजनितं ज्योति र्द्युलोकपर्यन्तं व्याप्तं वर्तते । तत्र त्वं लग्नो माभूः। तेन तव प्रदग्धता माभूदिति एव मुक्तवन्त मग्रगामी हंसः प्रत्युवाच । एन ञ्ज्ञानश्रुति म्मनुष्यसामान्यदशा मतिक्रम्य वर्तमानं शकटसहितं रैक्वमिव कीदृश माहात्म्यशालिन मात्थ। रैक्वएवखलु ब्रह्मज्ञो महाप्रभावः । अस्य जानश्रुते रब्रह्मज्ञस्य कः प्रभावः । यज्जनित मस्यतेजो । रैक्वप्रभावज न्तेजइव दहेदि त्याशयः ॥ एत दाकर्ण्य तेन पृष्ठगामिना कोऽसौ रैक्वइति पुनःपृष्ट स्सएव प्रत्युवाच । सर्वेषामपि । य द्याव त्कर्मजातं वर्तते विज्ञानंच तत्सर्वं यदीयकर्मविज्ञानान्तर्भूत मसौ रैक्व इति ॥ तदेतद्धंसवाक्यं रैक्वप्रशंसारूप न्तथाभूतस्य रैक्वस्यैव ज्योति रसह्य न्नत्वस्य वराकस्येति । स्वनिन्दागर्भंच जानश्रुति राकर्ण्य कथमपि निशा मतिवाह्य तल्पन्त्यजन्नेव क्षत्तार माहूय सचिह्नमुक्त्वा तदन्वेष णाय तम्प्रेषयित्वा क्वचि द्विविक्तदेशे शकटस्याऽधस्ता त्पामान ङ्कण्डूय मानं रैक्व मुपलभ्य प्रत्यागम्य निवेदितवति तस्मिन् स्वयं रैक्व मुपगम्य गवां षट्शतानि निष्कम् हार मश्वतरीयुक्तंरथं चोपहृत्य - त्वदुपास्या न्देवता मनुशाधीति रैक्व म्प्रार्थयामास । स रैक्व स्तेन दीयमानं सर्व म्प्रत्याचक्षाण एव मुवाच । अह हारे शूद्र तवैव सहगोभि रस्त्विति ।

अहेतिनिपातः, हारसहितइत्वारथः । गोभिस्सहतवैवाऽस्तु । किं मने नाऽल्पधनेन सन्तोषः । मम कळत्रहीनस्य प्रतिष्ठाहीनस्यच । का मम एतद्धनरक्षणे शक्तिः । तववा मत्प्रयोजनापर्यवसा य्यल्पधनदानेन ब्रह्म विद्या प्रतिष्ठिता नभवेदिति भावः । पुन र्जानश्रुतौ सहस्र ङ्गवा म्पूर्वानीतं हारादिकं । रैक्वस्य परिणयनार्थं ङ्कन्या मावसथार्थं न्तत्रत्यं ग्राम ञ्चोप हृत्य प्रार्थयमाने विद्याप्रदानार्थ मुपहारस्य पर्याप्तता मनुजानानस्य रैक्व स्येदं वाक्यम् । आजहा रेमा श्शूद्रे त्यादि । इमा दक्षिणा आहृतवानसि अनेनैव सुखेन विद्याग्रहणोपायेन मा मालापयिष्यसि । ब्रह्मविद्योपदेष्टार ङ्करिष्यसी त्यर्थः ॥ एव ञ्जानश्रुतिवृत्तान्तेन निषदा मुपासनाविधायकत्वावगमेन तदानुगुण्येन सगुणब्रह्मपरत्वप्रसिद्ध्याच ननि र्गुणब्रह्मप्रतिपादकत्वं नसुतरा ङ्केवला द्वैतपथसाधकत्वंवेति विशदम् ॥

तथा, सत्यकामवृत्तान्तेपि - यथा, उपकोसलः कामलायन स्सत्यकाम आचार्य मुपसन्नः तस्य द्वादशवर्षा ण्यग्नीन्परिचर न्नवास ॥ तस्मै ब्रह्मोपदेश मकृत्वैव आचार्ये प्रोषितेस त्याधिव्याधिपरवश मनश्नन्त न्तदाद्याचार्याग्निपरिचर्याया मवहित न्त मवेक्ष्य गार्हपत्यदक्षिणाग्न्यव नीया स्त्रयो प्यग्नयस्सम्भूय करुणया तस्मै प्राणोब्रह्म कं ब्रह्म खम्ब्रह्मे त्यादिना ब्रह्मविद्या मुपदिश्यप्रत्येकंच स्वस्वविषयांविद्याम् । य आदित्ये पुरुषो दृश्यते सोह मस्मि सएवाऽहमस्मी त्यादिना । यएष चन्द्रमसि पुरुषो दृश्यतइत्यादिना – यएष विद्युति पुरुषो दृश्यत इत्यादिना चोप दिदिशुः ॥ तदनन्तरम्, सर्वेऽग्नय स्सभूय । एषा सोम्यतेऽस्मद्विद्या चात्म विद्या चेत्यभिधाय आचार्यद्वेयव विद्या विदिता सग्दि माप्स्यदिति

श्रुत्यनुसारेण स्वोपदिष्टविद्या तदाचार्य कर्तृकग त्युपदेशेन साधिष्ठत्व म्प्राप्नो त्वित्यालोच्य चाचार्यस्तु ते गतिं वक्ते त्यवोचन् । ततः प्रत्यागत आचार्यः प्रसन्नमुख मुपकोसलं वीक्ष्य 'ब्रह्मविदइव वैसोम्य ते मुख म्भाति कोनुत्वा मनुशशा सेति पृष्ट्वा सहाग्निभि र्भीते तस्मि न्नग्नयोऽस्मा उपदिदिशुरिति निश्चित्य। किन्नु सोम्य किल तेऽवोचन्निति पृष्ट्वा । एताव दुपादिशन्निति तेनोक्ते तत्र वक्तव्यशेषोऽस्ती त्यवधार्य अह न्ते तद्व क्ष्यामि' यथा पुष्करपलाश आपो नश्लिष्यन्ते। एव मेवंविदि पाप ङ्कर्म नश्लिष्यतइति स्ववक्तव्य म्प्रतिज्ञाय ब्रवीतु भगवानिति तेन प्रार्थितः। संयद्वामत्वादिगुणक मक्षिपुरुष मुपदिश्य। तदुपासकस्य'ते ऽर्चिष मभिसम्भवन्ती त्यादिना, एष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इम म्मानव मावर्त न्नावर्तन्तइ त्यर्चिरादिगति मुपदिष्टवानि त्याम्नायते एव मिय मुपनिषदुपास्यरूपसविशेषब्रह्म प्रतिपादकत्वेन। सगुणब्रह्म-लोकप्रापकार्चिरादिगतिबोधकत्वेनच निर्गुणब्रह्मवादिनाङ्गत्यभाव वादि - नांच मत न्निराकरोतीत्यविवादं ॥

किंच, प्रथमप्रपाठके, अथ यएषोन्तरादित्ये हिरण्मयः पुरुषोदृश्यते हिरण्यश्मश्रु र्हिरण्यकेश आप्रणखा त्सर्वएव सुवर्णः। यथा कप्यास म्पुण्डरीकमेव मक्षिणी तस्योदितिनाम। सएष सर्वेभ्यः पाप्मभ्य उदितः। इत्यादिना परमेश्वर न्द्रुतकनकसवर्ण मुपदिशन्ती नामरूप रहित ङ्कालमेघसवर्णं चाऽभिनन्वता म्मतानि पारेसमुद्र म्पातयति ॥ अत्र यत्पुण्डरीकाक्षत्वरूपलिङ्ग मादाय प्रत्यवस्थान म्परेषा न्तदशेषं वैष्णवपथ प्रतिषेधे निराकरिष्यतइतिनेह ॥

ननु , छान्दोग्ये षष्ठप्रपाठके । सदेव सोम्येद मग्र आसी देकमेवाऽद्बितीय मित्यादिवचनै स्सजातीयविजातीयस्वगतभेदरहितसन्मात्र ब्रह्मैकत्वस्य प्रतिपादने नेय मुपनिष च्छुद्धाद्बैतसाधिकै वेतिचेन्न । एक विज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनमुखेन सच्छब्दवाच्यस्य ब्रह्मणो जगदु पादानत्व जगन्निमित्तत्व सर्वज्ञत्व सर्वशक्तिमत्व सत्यसङ्कल्पत्व सर्वान्त रत्व सर्वाधारत्व सर्वनियामकत्व सर्वात्मकत्वा द्यनन्तमाङ्गल्यगुणप्रतिपाद नपूर्वक मेव म्भूतब्रह्मात्मक स्त्वमसीतिश्वेतकेतु म्प्रत्युपदेशाय प्रवृत्तत्वेन सद्विद्यायानिर्विशेषब्रह्मप्रतिपादकत्वाभावात् ।

ननु , छान्दोग्यश्रुतिः नसुतरां शिवाद्बैतपरा भवितुमर्हति ॥

तत्र , तत्वमसीति नवकृत्त्वउपदेशेनास्या जीवब्रह्मैक्यप्रतिष्ठा पनपरत्वावगमादितिचेत् । उच्यते । यदितत्त्वमसीत्यादिवाक्यै रिय ञ्जीव पराभेदेतात्पर्यवती स्यात् तर्हि सत्यमेव नशिवाद्बैतबोधिनीति । विमर्शनेतु केवल मिय मात्मैक्य आपाततो भ्रमञ्जनयन्ती हार्द मकुटिलम् । शिवा द्बैतएव विवृणोति ॥ तथाहि ॥

षष्ठाध्यायेऽष्टमखण्डिकायाम् श्रु ॥ उद्दालकोऽहारुणि श्श्वेतकेतु म्पुत्र मुवाच । स्वप्नान्त म्मे सोम्य विजानीहीति । य त्रैतत्पुरुष स्स्वपितिनाम सता सोम्य तदा सम्पन्नो भवति स्व मपीतोभवति तस्मा देनगं् स्वपिती त्याचक्षते - स्वगं् ह्यपीतो भवति ॥

* * * *

सयएषोऽणिमैतदात्म्यमिदगं् सर्वंतत्सत्यंसआत्मातत्त्वमसिश्वेतकेतोइति ॥

अत्र - सता सोम्य तदासम्पन्नोभवति स्वमपीतो भवतीति

सुषुप्तौ जीवस्य परमेश्वरसमागमप्रदर्शनद्वारा सुषुप्तिस्थानत्वेन परमेश्वरस्य सर्वजीवाधिष्ठानता प्रदर्शिता ॥

ननु, सता सम्पन्नइति नजीवस्य परमेश्वरेण साङ्गत्य मभि धीयते किन्तु एकत्वमेवेति चेन्न पद्यते गत्यर्थकत्वानुशासनव्याकोपात्। सुषुप्तौ जीवपरयो र्भेदस्यैव श्रुत्यन्तरे णोपबृं हितत्वाच्च। तथाहि - बृहदारण्यके – अय म्पुरुषः प्राज्ञे नात्मना सम्परिष्वक्तो नबाह्य ङ्किञ्चन वेद नान्तरमि तीयं सूक्तिः। सुषुप्तौ जीवस्यपरमेश्वरपरिष्वङ्गमूल म्बाह्या न्तरज्ञानाभाव मुपदिशन्ती जीवा त्परमेश्वरस्याऽर्थान्तरत्व मवधारयति ॥

अतएव भगवान्सूत्रकारोपि। सू ॥ सुषुप्त्युत्क्रान्त्यो र्भेदेने त्यमु मेवाऽर्थ न्निर्धारयामास ॥

यदुक्त मत्परैः। योऽयंविज्ञानमयः प्राणेष्विति नसंसारिस्व रूपं विवक्षित ङ्किन्त र्ह्यनूद्य संसारिस्वरूप म्परेण ब्रह्मणाऽस्यैक्यं विवक्षित मिति तदसत्। तत्र संसारिणो जीवाद्विविक्तत्वेन परमेश्वरस्य प्रदर्श नार्थमेव जीवस्याऽनूदितत्त्वात्। जीवपरयो रेकत्वस्य विवक्षितत्वे भेदेने त्यादिना भेदावधारणपरिश्रमस्य निरर्थकत्वा दसमञ्जसत्वाच्च ॥ एतेन प्राचीमपि दिशम्प्रस्थापितः प्रतीचीमपि दिश म्प्रतिष्ठेतेति स्वोक्त्यो यस्य भाजन म्परएवाऽभूवन्नित्यलम् ॥

तत्राऽय न्दृष्टान्तो यथोक्तेर्थे। सयथा शकुनिरिति ॥ यथा शकुनिः पक्षी शकुनिघातकस्य हस्तगतेन सूत्रेण प्रबद्धः पाशितो दिश न्दिश म्बन्धनमोक्षार्थी सन्प्रतिदिश म्पतित्वाऽन्यत्र बन्धना दायतन माश्रय मलब्ध्वा बन्धनमे वोपश्रयते। एवमेव यथाऽयं दृष्टान्तः खलु सोम्य।

तन्मन स्तदुपलक्षितो जीवः । दिशन्दिश ङ्कामकर्मोपदिष्टांसुखदु खलक्षणा म्पतित्वागत्वाऽनुभूये त्यर्थः । अन्यत्र परमेश्वरा दायतनं विश्रमणस्थान मलब्ध्वा प्राणम्परमेश्वरमे वोपश्रयते । यस्मात् सोम्य मनः जीवः प्राणबन्धनम्-परमेश्वराश्रयः ॥ श्रु ॥ प्राणस्य प्राणम् - प्राण शरीरइत्यादिश्रुत्या प्रकृतेप्राणशब्देन परमेश्वरो निगद्यते ॥

एवंच - दृष्टान्ते - दार्ष्टान्तिके प्याश्रयाश्रयिभावेन भेदस्यैव स्फुटतर मुपदिष्टत्वेन तत्त्वमसी त्यनेन जीवपरयो र्नाभेदो विवक्षितइति विदितम् ॥ ततश्च – सन्मूला स्सोम्येमा स्सर्वाः प्रजा स्सदायतना स्सत्प्रतिष्ठा इति परमेश्वरस्य प्रतिज्ञातंसर्वाधारत्वम् ॥

सयएषोऽणि मैतदात्म्य मिदग्ं सर्वं न्तत्सत्यं सआत्मा तत्वमसि श्वेतकेतो इति परमेश्वरस्य श्वेतकेत्वन्तरात्मत्वविशेषेण सम र्थयति ॥

ततः पुत्रः “ यद्भवदुक्त न्तत्सन्दिग्ध म्मम । अहन्यहनि सर्वाः प्रजाः सुषुप्तौ परमेश्वर मुपगम्य वय म्परमेश्वर मुपगताइति कथ न्नविविदुः । तत्र दृष्टान्तेन मा म्बोधयत्वि त्याशयेन भूयएव माभगवा न्विज्ञापयत्विति पितर म्पप्रच्छ ॥

ततः पिता सोम्येति होवाच ।

यथा सोम्य मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणाग्ं रसा न्समवहार मेकताग्ं रस ङ्गमयन्ति ॥ ते यदा तत्र नविवेकंलभन्तेऽमुष्याहं वृक्षस्य रसोऽस्मी त्येवमेवखलु सोम्येमा स्सर्वाः प्रजा स्सतिसम्पद्य नविदु स्सति सम्पत्स्या मह इति ॥ तइह व्याघ्रोवा सिंहोवा वृकोवा वराहोवा

कीटोवा पतङ्गोवा दग्ंशोवा मशकोवा यद्यद्भवन्ति तदाभवन्ति ॥ सयएषोऽणि मैतदात्म्य मिदग्ं सर्वन्त त्सत्यं सआत्मा तत्त्वमसि श्वेतकेतोइति ॥

अस्याऽय माशयः । ते रसाः यथा मधुत्वे नैकताङ्गताः 'अह माम्रस्य पनसस्यवा वृक्षस्य रसोस्मीति । एवमेव सर्वाः प्रजाः अहन्य हनि सति सम्पद्य'सुषुप्तिकाले मरणप्रळययोश्च सति सङ्गताइति नवि दुरिति ॥ नच, रसाना मचेतनत्वेन विवेकानर्हत्वा त्तथात्वेपि चेतना नामय न्दृष्टान्तो नसङ्गतइतिशङ्क्यम् । चेतनानामपि सुषुप्त्यादौ जाड्या वृतत्वेन रसतौल्येन तेषां विवेकानर्हावस्थापत्तिमात्रेप्रकृतोदाहरणस्यसङ्ग तत्वात् ॥ एवं सुषुप्त्यादिसर्वावस्थास्वपि सर्वजीवाधिकरणभूतः परमेश्वर स्सर्वात्मतया भवतो प्यात्मभूतएवेति ॥ ततःयथा लोकेस्वकीये गृहे सुप्त उत्थाय ग्रामान्तर ङ्गतो जानातिस्वगृहा दागतोस्मीति । एव म्पर मेश्वरा दागतोऽस्मीति जन्तूना ङ्कथमिवज्ञान न्नभवतीति शङ्कमानः श्वेत केतुः पितर माह 'भूयएव भगवान्विज्ञापयत्विति ॥

एवम्पृष्टः पिता पुत्रमाह ॥ तथा सोम्येति होवाच ॥

इमा स्सोम्य नद्यः पुरस्ता त्प्राच्य स्स्यन्दन्ते पश्चा त्प्रतीच्य स्ता स्समुद्रा त्समुद्रमे वाऽपियन्ति समुद्रएव भवन्ति ता।यथा तत्र नविदु रिय महम स्मीय महमस्मीति ॥ एवमेव खलु सो म्येमा स्सर्वाः प्रजा स्सत आगम्य नविदु स्सत आगच्छामहइति ॥

तइह व्याघ्रोवा..................तत्सत्यं सआत्मा तत्वमसि श्वेत केतोइति ॥ अस्याऽय म्भावः ॥ हेपुत्र । शृ ण्वत्रदृष्टान्तम् । यथा ।

गङ्गाद्या नद्यः काश्चन प्राची ङ्कतिचिच्च प्रतीचीञ्च दिशम्प्रति गच्छन्त्य स्समुद्रमेव प्रविशन्त्यो यथा गङ्गाऽह मस्मि यमुनाऽह मस्मीति नजानन्ति तथा विवेक न्नलभन्ते । एवमे वेमाः प्रजा स्सति सम्पद्य नविदु स्सति सम्पद्यामहइति ॥

ननु , नदीसमुद्रयो र्जलमात्ररूपत्वेनाऽभिन्नत्वा दनेन दृष्टा न्तेन जीवपरयो रभेद स्सूचित इतिचेन्न । अत्र नदीसमुद्रयो र्जलमात्र रूपत्वे प्येकत्व मनभिप्रेत्य भेदाभिप्रायेणैव गृहीतत्वात् । अन्यथा - सति सम्पद्य नविदुरिति जीवाना म्परमेश्वरसाङ्गत्यरूपदार्ष्टान्तिकस्य नदीसमुद्र समागमरूपदृष्टान्तस्यच वैषम्यमापद्येत ॥ तस्मा दस्मि न्नपि वाक्ये जीवपरयो र्भेदएव विवक्षितइति विशदम् ॥

ततः श्वेतकेतुः पितर मुद्दिश्य - हेपितः , जीवाः परमेश्वर म्प्रत्यहं सुषुप्तौ मरणप्रळययोश्च गच्छन्तोपि नविनश्य न्तीत्येतत्म न्दृष्टान्तेन बोधय त्वित्याशयेन भूयोमाविज्ञापयत्विति पप्रच्छ ॥ ततः पिता तथा सोम्येति होवाच ॥ अस्य सोम्य महतो वृक्षस्य योमूलेऽभ्याहन्या ज्जीवन् स्रवेद्यो मध्येऽभ्याहन्या ज्जीवन् स्रवेद्योऽग्रेभ्याहन्या ज्जीवन् स्रवे त्सएष जीवेनात्मनाऽनुप्रभूतः पेपीयमानो मोदमान स्तिष्ठति । तस्य यदेकागं शाखा ञ्जीवो जहा त्यथ साशुष्यति द्वितीयाञ्जहा त्यथ साशु- ष्यति सर्वं ञ्जहाति सर्वं श्शुष्यत्येवमेव खलु सोम्य विद्धीति होवाच ॥ जीवापेतं वावकिलेद म्म्रियते नजीवोम्रियतइति । सय एषोऽणि मैत- दात्म्य मिदगं सर्व न्तत्सत्यगं सआत्मा तत्वमसि श्वेतकेतोइति ॥

अत्रैव प्राकृतम् ॥ जीवोऽपि वृक्षस्य शाखां रोगग्रस्ता माह

तांवा शाखा ञ्जहाति सासा शुष्यति । जीवस्थितिनिमित्त जीवकर्मा क्षिप्तो देहो जीवोपसंहारे नतिष्ठति । रसापगमेच शाखा शुष्यति । तथा यदि सर्वं वृक्षमेव जीवो जह्या त्तदा वृक्ष स्सर्वोपि शुष्यति ॥ वृक्षस्य रसस्रवणशोषणादिलिङ्गा ज्जीववत्वम् । दृष्टान्तश्रुतेश्च चेतनावन्त स्थावरा इति । एतेन – अचेतना स्स्थावराइति बौद्धकाणादमत मसारमिति दर्शितम् । इह वृक्षदृष्टान्तेन दर्शितोऽयमर्थः । जीवेन युक्तो वृक्षोऽशुष्को रसपाकादियुक्तो जीववा नित्युच्यते । तदपेतश्च म्रियतइ त्युच्यते ॥ एवमेव जीवेन वियुक्तं शरीरमेव म्रियते । नजीवो म्रियतइति ॥ कार्य शेषेच मयारब्ध मिद ङ्कार्य मपरिसमाप्तमिति स्मृत्या सुप्तोत्थितस्य समापनदर्शनात् । जातमात्राणांच जन्तूनां स्तन्याभिलाषभयादिदर्शनाच्च । अतीतजन्मान्तरानुभूतस्तनपानदुःखानुभवस्मृति र्गम्यते । अग्निहोत्रादीनांच कर्मणा मर्थवत्वाच्च नजीवो म्रियतइति । ततः कथम्पुन रिद मत्यन्तस्थूल म्पृथिव्यादिजग दत्यन्तसूक्ष्मात्परमेश्वरा ज्जायतइ त्येतद् दृष्टान्तेन भूयो विज्ञापयत्विति पुत्रेण पुनः पृष्टः पिता तथा सोम्येतिहोवाच ॥ न्यग्रोधफलमत आहारे तीद म्भगवइति भिन्धीति भिन्न म्भगवइति । कि मत्र पश्यसी त्यण्व्य इवेमा धाना भगवइ त्यासा मङ्गैका म्भिन्धीति भिन्ना भगवइति कि मत्र पश्यसीति नकिञ्चन भगवइति ॥ तग्ंहोवाच यंवै सोम्यैत मणिमान न्ननिभालयस एत स्यकिल वैसोम्यैषोऽणिम्न एव म्महा न्नयग्रोध स्तिष्ठति ॥ श्रद्धत्स्व सोम्येति सय एषोऽणि मैत दात्म्य मिदग्ं सर्व न्तत्सत्यग्ं सआत्मा तत्वमसि श्वेतकेतोइति ॥

अस्यायम् माशयः । यथा वटधानाया म्भिन्नायां वटबीजाणि

मान मेत न्नपश्यसि । तथा प्येतस्य वैकिल बीजस्याऽणिम्न स्सूक्ष्मस्याऽ दृश्यमानस्य कार्यभूतो महा न्न्यग्रोधस्थूलशाखास्कन्धफलादिमा नुत्तिष्ठति।। एवमेव स्थूल मिद ञ्जग दत्यन्तसूक्ष्मात्सत उत्पद्यतइति ।। एवं सर्व स्यापि जगतो मूलभूत एषोऽणिमा सएव सर्वस्या प्यात्मा भवा नपि तदात्मकएवेतिभावः ।।

ततः यदि तत्सत् जगतोमूल ङ्कस्मा न्नोपलभ्यतइ त्येतद्दृष्टन्तेन मा म्बोधयत्वि त्याशयवा न्पुत्रः भूयोमां विज्ञापय त्विति पप्रच्छ ।।

ततः पिता । तथा सोम्येतिहोवाच । लवण मेत दुदकेऽव धायाऽथ माप्रात रुपसीदथा इति सह तथाचकार तगूं होवाच। यद्दोषा लवण मुदकेऽवाधा अङ्ग तदाहरेति तद्धावमृश्य नविवेद । यथा विलीन मेवाऽङ्ग । अस्याऽन्ता दाचामेति कथमिति लवणमिति मध्या दाचामेति कथमिति लवणमि त्यभिप्रास्यैतदथमोपसीदथाइति तद्ध तथाचकार तच्छश्व त्संवर्तते तगूंहोवाचचात्र वावकिल सत्सोम्य ननिभालयसेऽ त्रैवकिलेति ।। सयएषोणि मैतदात्म्य मिदगूं सर्वन्तत्सत्यगूं सआत्मा तत्वमसि श्वेतकेतोइति ।।

अस्येदं हृदयम् ।। विद्यमानमपि वस्तु नोपलभ्यते प्रकारान्त रेण तूपलभ्यतइत्यत्र शृणुदृष्टान्तम् । यदिचेम मर्थ म्प्रत्यक्षीकर्तु मिच्छसि पिण्डरूपं लवण मेतद्घटादा वुदके प्रक्षिप्यमांश्वः प्रात रुपगच्छेथाइति । सहि पित्रोक्त मर्थ म्प्रत्यक्षीकर्तु मिच्छन् पिण्डरूपं लवणं रात्रा वुदके निक्षिप्य प्रातः पितु स्समीप मागात् ।। तगूंहोवाच पिता । यल्लवणं रात्रा वुदके निक्षिप्तवानसि तदाहरेति । पुत्रस्तल्लवण माजिहिर्षु रव

मृश्य उदके नविवेद । यथा तल्लवणं विद्यमानमेव स दप्सु लीन मभूत् यथा विलीनं लवण न्नवेत्थ । तथापिचक्षुषा स्पर्शनेनच पिण्डरूपं लवण मगृह्यमाणं विद्यतएव । उपायान्तरे णोपलभ्यतएवे त्येत त्पुत्रं बोधयितु मिच्छन् आह अङ्ग अस्योदकस्याऽन्ता दाचामे त्युक्त्वा तथा कृतवन्त म्पुत्र मुवाच । कथमिति । इतरआह लवणमिति । तथा मध्या दुदकस्य गृहीत्वा आचामेति कथमिति । लवणमिति । तथा अधो देशाद् गृहीत्वा आचामेति । कथमिति लवणमिति ॥ यदेव मभिप्रास्य – परि त्यज्य मोपगच्छेति । ततः पुत्रः तदुदक म्परित्यज्य पितृसमीप मागत्य हेपितः रात्रा वुदके मया निक्षिप्तं लवण मिदानी न्दर्शनस्पर्शनाभ्या न्नगृहीतमपि जलएव वर्तते उपायांतरेण जिह्वया उपगृह्यमाणत्वा दित्याह ॥

ततः पितोवाच । यथाऽत्रैवोदके दर्शनस्पर्शनाभ्या मनुपलभ्य मानं लवणं विद्यमानमेव जिह्वया उपलब्धवानसि । एवमेव विद्यमानं सत् जगतोमूल मुपायान्तरेण लवणाणिमे वोपलभ्यत इति ॥

ततः पुत्रः यद्येवं लवणाणिमव दिन्द्रियै रनुपलभ्यमानमपि जग न्मूलं स दुपायान्तरे णोपलब्धुं शक्यते यदुपलम्भा त्कृतार्थ स्स्या मनु पलम्भा च्चाकृतार्थ स्तस्योपलब्धौ कउपाय इत्येतत् भूयएव माविज्ञाप - यत्विति, एव म्पृष्टःपिता । तथासोम्येतिहोवाच ॥

यथासोम्यपुरुष ङ्गन्धारेभ्यो भिनद्धाक्ष मानीय त न्ततोऽतिजने विसृजे त्सयथा तत्र प्राङ्वोदङ्वाधराङ्वा प्रध्मायीताऽभिनद्धाक्ष आनीतोऽभि नद्धाक्षो विसृष्टः॥ तस्ययथाऽभिनहनं विमुच्य प्रब्रूया देता न्दिशङ्गन्धारा

एतान्दिशं ॒व्रजेति सग्रामाद् ग्राम म्पृच्छ न्पण्डितो मेधावी गन्धारा नेवोपसम्पद्ये तैव मेवेहाचार्यवा न्पुरुषोवेद तस्य तावदेव चिरं याव न्नवि मोक्ष्येऽथसम्पत्स्य इति ॥ सय एषोऽणि मैतदात्म्य मिदगुं सर्वं न्तत्सत्यं सआत्मा तत्वमसिश्वेतकेतोइति ॥

अस्याऽय·माशयः। यथालोके हेसोम्य पुरुषं यङ्कश्चित् गन्धारजन पदेभ्यः बद्धचक्षुष मानीय द्रव्यहर्ता तस्कर स्तमेव बद्धहस्त मरण्ये तत्रा प्यत्यन्तविजने देशे विसृजेत्स तत्रदिग्भ्रमोपेतो यथा प्राङ्मुखोवा । प्रत्यङ्मु खोवा अहम्पिनद्धाक्षो गन्धारेभ्य स्तस्करेणानीतः पिनद्धाक्षएव विसृष्टः इत्याक्रोशेत् एवं विक्रोशत स्तस्य यथाबन्धन म्मुक्त्वा कारुणिकः कश्चिदेव मुत्तरान्दिश ङ्गन्धारा उत्तरान्दिशं व्रजेति प्रब्रूया त्सएव कारुणिकेन बन्धना न्मोक्षितः ग्रामाद्ग्रामान्तर म्पृच्छन्नुपदेशवा न्परोपदिष्टग्राम प्रवेश मार्गावधारणसमर्थस्सन् गन्धारानेवोपसम्पद्येत नेतरो मूढमतिः देशान्तर दिदृक्षापरवशोवा ॥ यथाऽय न्दृष्टन्तो वर्णितः । स्वविषयेभ्यो गन्धारेभ्यः पुरुषतस्करैः पिनद्धाक्षोऽविवेको दिङ्मूढोऽशनायापिपासादिमान् व्याघ्र-तस्कराद्यनेकभयानर्थशतयुत मरण्य म्प्रवेशितोदुःखार्तो विक्रोशन्बन्ध नेभ्यो मुमुक्षु स्तिष्ठति । सकथञ्चि देव कारुणिकेन केनचि न्मोक्षितः स्वदेशा न्गन्धाराने वोपपन्न स्सुखीभवति एवमेवसर्वात्मनः परमेश्वरा त्प्रच्या व्य अनादिकर्मतस्करेण देहारण्यं वातपित्तकफरुधिरमांसास्थिम च्चेदं मोहपटापिद्धाक्षो भार्यापुत्राद्यनेकविषयतृष्णापाशितः अनेकशतसहस्रा नर्थजालवा न्विक्रोशन् कथमपि पूर्वपुण्यवशात् परमकारुणिकङ्कश्चि द्ब्रह्मिष्ठं यदासादयति तेनच परमेश्वरोपासकेन कारुण्या द्दर्शितसंसार विषयदोष

विशेषो विरक्त स्संसार:विषयेभ्यो  नासित्व म्मृततनु  दारपुत्रबन्धुः  कि न्त्वमृततनुः परमेश्वरबन्धुरिति मोहपटाभिनहना न्मोचितः संश्रुतपरमेश्वर स्समुपदिष्टपरोपासनमार्गः ।  तत्वमनननिदिध्यासनपण्डितो गान्धार पुरुष  स्स्वीयन्देशमिव स्वीय मात्मान म्परमेश्वर मुपसम्पद्य सुखीस्यादि त्येतमेवाऽर्थं  माहाचार्यवान्पुरुषोवेदेति तस्य एवमाचार्यवत स्समुप दिष्टपरमेश्वरोपासना मार्गस्य तावदेव परमेश्वर साक्षात्कारो यावदित्यर्थः ।

ननु ,  इदं गान्धारपुरुषोदाहरण ञ्जीवपरयो र्भेदेनोपपद्यते । नासि त्वं संसारी किन्तु तत्परम्ब्रह्मैवेति तत्वोपदेशेनाऽहं संसारीति मोहपटस्य मोचितत्वश्रवणात् । इतिचे । न्न । प्रकृतगान्धारदेश प्राप्तृ पुरुषोदाहरणेन जीवपरयोः प्राप्यप्राप्तृभावावगमेन भेदस्यैव श्रुतितात्पर्य सिद्धत्वात् । यदि जीवपरयो रैक्ये तैक्यमेव भगवत्या श्श्रुत्या स्तर्हि दश मविवेकदृष्टान्तं व्याधकुलवर्धितराजकुमारदृष्टान्तंवा उदाह्रियात् तथा कुतो नोदाजहार । किमस्फुरणा दुतमर्त्यें ष्वननुग्रहादिति । लोकसमुत्तार णाय यावती प्रज्ञा यावती चानुजिघृक्षा परेषा न्तावती नतस्या स्सम्ब भूवेति किमत श्छिलतम न्तस्मा दसम्भाव्य मैक्यञ्जीवपरयोरितियुक्तत् ।

किञ्च ,  यदितत्वमसीति सूक्तेरैक्येतात्पर्यंभगवत्याश्श्रुतेर्विद्येत तर्हिनवस्वपिखण्डिकास्वेकस्यांवा अभेदसाधकं दशमविवेकादिकं कुतो नोदाह्रियेत ? कुतश्चभेदसाधकं शकुनिसूत्र गान्धारदेश पुरुषादिक मेवोदाह्रियेत । तस्मादैक्ये नश्रुतेस्तात्पर्यमणीयोपीतिदिक् ॥

आचार्यवा न्विद्वानेव परमेश्वर मुपसम्पद्यतइ त्युक्तम् । एव मुक्तंपरमेश्वरप्राप्तिक्रम  ...  सूत्रक  ...  विज्ञापयत्विति

पुत्रेण पृष्टः पिता । तथासोम्येतिहोवाच । पुरुषगं् सोम्योपतापिनम् ज्ञातयः पर्युपासते जानासि मा ज्ञानासिमा मिति तस्य याव न्नवाङ्म नसि सम्पद्यते मनः प्राणे प्राण स्तेजसि तेजः परस्या न्देवताया न्ताव ज्जानाति । अथ यदास्यवा ङ्मनसि सम्पद्यते मनः प्राणे प्राण स्तेजसि तेजः परस्या न्देवताया मथजानाति ॥ सयएषोऽणि मैतदात्म्य मिदगं् सर्व न्तत्सत्यं सआत्मा तत्वमसि श्वेतकेतोइति ॥

संसारिणो योमरणक्रमः सएवाऽयं विदुषोपि परमेश्वरप्राप्ति क्रमइत्येत दाह ॥

परस्या न्देवताया न्तेजस्सम्मन्नेऽथ नजानाति । अविद्वांस्तु परमेश्वरा दुत्थायप्राग्भावितं व्याघ्रादिभाव न्देवमनुष्यादिभावंवा विशति । विद्वांस्तु मूर्धन्यया नाड्या उत्क्रम्य आदित्यादिद्वारेण परमेश्वर मुपसम्प द्यनावर्तते । इत्येष सत्सम्पत्तिक्रमः । परे त्वत्रैव सत्सम्पत्ति मभिमन्वते । तदसत् । तत्व ज्ञतिनिष्कर्षइति नेह ॥

ततः , यदि मरिष्यतो मुमुक्षतश्च तुल्या सत्सम्पत्तिः तत्र विद्वान् सत्सम्पन्नो नावर्तते । आवर्तते त्वविद्वा नित्यत्र कारणन्दृष्टा-न्तेन भूयएव माभगवा न्विज्ञापयत्विति पृष्टः पिता तथा सोम्येतिहोवाच॥

पुरुषगं् सोम्योत हस्तगृहीत मानय न्त्यपहार्षीत् स्तेय मकार्षी त्परशु मस्मै तपतेति सयदि तस्य कर्ता भवति ततएव सत्य मात्मान ङ्कुरुते सोऽनृताभिसन्धोऽनृतेनात्मान मन्तर्धाय परशु न्तप्त म्प्रतिगृह्णाति सदह्यऽतेसहन्यते । अथ यदितस्याऽकर्ता भवतिततएव सत्य मात्मान ङ्कुरुते । सत्याभिसन्ध स्सत्येनाऽऽत्मान मन्तर्धाय परशुन्तप्त म्प्रति

गृह्णाति सनदह्यतेऽथमुच्यते ।। सयथा तत्र नदह्ये तैतदात्म्यमिदगं सर्वं न्तत्सत्यंसआत्मा तत्वमसि श्वेतकेतोइति ।। तद्धास्य विजज्ञाविति विजज्ञाविति ।।

तप्तपरशुहस्ततलसंयोगस्य तुल्यत्वेपि स्तेयकर्त्रकर्त्रो रनृताभिसन्धो दह्यते नतुसत्याभिसन्धइति ।।

सयथा सत्याभिसन्ध स्तप्तपरशुग्रहणकर्मणि सत्यव्यवहितहस्ततलत्वान्नादाह्यतेत्येतदेवं शरीरपातकालेच तुल्यायां परमेश्वरप्राप्ता वुपासकः परमेश्वरसाक्षात्कारप्रक्षीणाशेषकर्मबन्धनत्वान्नपुन रावर्तते । अन्यस्तु सुखदुःखभोगमूलानृतपदाभिधेयकर्माभिसन्धत्वा द्यथाकर्म यथाश्रुतञ्च पुनरावर्तते । एवञ्च । य त्साक्षात्कारलाभालाभकृते मोक्षबन्धने । यच्च मूलञ्जगतो यदायतनायत्प्रतिष्ठाश्च सर्वाश्च प्रजाः । यदात्मकञ्च सर्वम् । यश्चामृताभयशिवकेवलादिपदाभिधेयस्तादृक्षःपरमेश्वरस्तवात्मा अतस्त्वन्तदात्मकोसीत्युक्तार्थं मसकृ द्वाक्यम् ।।

ननु , तत्वमसी त्युपसम्हारवाक्यस्य जीवपरयो र्भेदाभ्युपगमेन जीवशरीरकपरमेश्वरपरत्वविवक्षायां सदेवसोम्येत्युपक्रमो विरुध्येत । तत्रहि सदेवेति सर्वस्यापि सन्मात्ररूपत्व म्प्रतिज्ञातम् । उपक्रमो ह्यनुपसञ्जातविरोधतयाबलवा नत स्तदविरोधाय तत्वमसी त्यत्र त्वन्तदसी त्यभेदएव तात्पर्यग्रहण मुचितमिति चेन्न । ऐतदात्म्यमिदगं सर्वं सआत्मा इ त्युपसम्हारे परमेश्वरस्य सर्वात्मत्वप्रतिपादनेन तात्पर्यलिङ्गवत उपसम्हारस्यैव प्रबलत्वेन तदनुरोधेन सदेवसोम्येद मित्यत्रापि सदात्मकत्वरूपार्थस्यैव लाभात् । किञ्च त्वन्तदसी त्यर्थस्य भागत्यागलक्षणैक

लभ्यत्वेनलक्षणैवदोषइत्यभ्युपगच्छताम्मते तादृशार्थस्याऽतिदुष्टत्वाच्च ॥ अपिचबृहदारण्यकादिश्रुत्यन्तरेषु यस्यात्माशरीरमि त्यादिना जीवपरयो श्शरीरशरीरिभावस्यै वोपदिष्टत्वेन – सू ॥ अन्तर्याम्यधिदैवादि ष्विति भगवता सूत्रकृता प्यस्यैवार्थस्य राद्धन्तितत्वेन ऋषिभि र्निश्चितेत्वर्थे काशङ्कास्या न्महात्मनामिति न्यायेन शिरोवाह्यतया श्रुतिसूत्रविरुद्धस्या भेदपरार्थस्यग्रहणानौचित्याच्च ॥

ननु, छान्दोग्ये सप्तमप्रपाठके 'योवै भूमा तत्सुखं नाल्पे सुखमस्ती त्यारभ्य यत्र नान्यत्पश्यति नान्यच्छृणोति नान्य द्विजानाति सभूमा अथ यत्राऽन्य त्पश्य त्यन्य च्छृणो त्यन्य द्विजानाति तदल्पम् । योवै भूमा तदमृत मथयदल्प न्तन्मर्त्यगं् सभगवः कस्मि न्प्रतिष्ठित इति स्वेमहिम्नि........................सएवाऽधस्तात्स उपरिष्टा त्सपश्चा त्सपुरस्ता त्सदक्षिणत स्सउत्तरत स्सएवेदगं् सर्व मित्यथातोऽहङ्कारादेश एवाऽहमेवाऽधस्ता दहमुपरिष्टा दहम्पश्चा दहम्पुरस्ता दह न्दक्षिणतोऽहमुत्त रतोऽहमेवेदगं् सर्वमिति । अथात आत्मादेशएवात्मैवाऽधस्ता दात्मोपरिष्टा दात्मापश्चा दात्मा पुरस्ता दात्मा दक्षिणत आत्मोत्तरत आत्मैवेदगं् सर्व मिति । सवाएषएव म्पश्यन्नेव म्मन्वान एवं विजान न्नात्मरति रात्म क्रीड आत्ममिथुन आत्मानन्द स्सस्वराड् भवति तस्यसर्वेषु लोकेषु कामचारो भवति । अथ योऽन्यथाऽतोविदु रन्य राजानस्तेक्षय्यलोका भवन्ति तेषागं् सर्वेषु लोके ष्वकामचारो भवतीति ॥ अत्र नान्यत्पश्यती त्यादिना भेद न्निराकृत्य - अहमेवाऽधस्ता दित्यादिना जीवात्मनः पर मात्मतोऽभेदम्प्रतिष्ठाप यतीतिचेन्न । योवैभूमे त्यादिवाक्यस्य ब्रह्म

विदाप्नोति परमित्यादिवेदान्तै र्मुक्तप्राप्यतया प्रतिपादिते परमेश्वरे प्राप्तिप्रयोजनभूतस्य निरतिशयानन्दरूपप्रयोजनस्य प्रतिपादकत्वात् ।

तथाच । यत्र नान्यत्पश्यती त्यस्य - निरतिशयानन्दघने ब्रह्म ण्यनुभूयमाने तत्रान्य त्किमपि नपश्य त्यनुभवितेत्यर्थः । अतएव । भूम शब्दवाच्ये ब्रह्मणि दृष्टे तन्निष्ठभेदप्रपञ्च दर्शनादिनिषेधः क्रियते । कथ मिह साङ्गत्यमितिचेत् भूम्निप्रत्यक्षे नान्यत्पश्यती त्यादे रय मभिप्रायः निरतिशयसुख स्वभावे यस्मि न्साक्षात्कृते सुखान्तराभिलाषेण रूपादि विषयदर्शनादौ नप्रवर्तते यन्मग्नः पुरुषः सभूमा ब्रह्मेति । ब्रह्मानन्दलवपर माणवोहि विषयसुखविशेषाः ॥

तथाहि श्रुतिः । एतस्यैवानन्दस्याऽन्यानि भूतानि मात्रा मुप जीवन्तीति ॥ तस्मा दिह नब्रह्मणि द्वैतनिषेधप्रसक्तिः । प्रपंचे सत्येव कथ म्मुक्तात्मना मपुरुषार्थस्य तस्य दर्शनं परिह्रियतइति नविचार्यम् । नहि मुक्तात्मना म्प्रकृतप्रपञ्चो दर्शनविषयः । किंतु निरतिशयानन्दस्वरूप म्ब्रह्मैव प्रपञ्चाकारेण दर्शनगोचरोभवतीति । तथाहिश्रुतिः । एतत्ततोभवति आकाशशरीरम्ब्रह्म सत्यात्मप्राणाराममिति तस्य वाक्पतिरित्यादिना स्वाधीना प्राकृतविशुद्धवागिन्द्रियादिसम्बन्ध उक्तः । तस्य पुन स्तादृशा वस्थाप्राप्त्यनन्तरम् एतद्दृश्यमान म्प्राकृतप्रपंचजाल माकाशशरीरं चिदम्बरप्रकाशशरीर म्ब्रह्मैव भवतीति भूमाधिकरणे भगवत्पादै र्निर्धारितम् ॥

नच , सएवाऽधस्तादित्यादिस्थाने अहमेवाऽधस्तादित्यादि श्रवणेन जीवपरयोर्भेदः प्रतिपादितइति शङ्क्यम् । अहमेवाऽधस्ता

दत्यादिवाक्यस्य पारमेश्वरसर्वात्मत्वोपदेशपरत्वात् । अथातोऽहङ्कारादेश इत्यहंग्रहोपासनोपदेशस्य प्रतिज्ञातत्वेन अहमर्थस्य प्रत्यगात्मनो प्यात्मा परमेश्वर इत्यन्तर्यामिब्रह्मणादि षूक्ततया परमेश्वरस्य प्रत्यगात्मशरीरकत्व ज्ञानप्रतिष्ठापनार्थं । प्रत्यगात्मशरीरत्वेन परमेश्वरानुसन्धानार्थञ्च अहंग्रहोपासनस्य कर्तव्यतया तदुपदेशस्याम्नातत्वेन आत्मरति रित्यादि वाक्यगतात्मपदस्य परमेश्वरपरत्वेनच नकथञ्चदपिकार्या जीवब्रह्माभेदसिद्धि प्रत्याशेति दिक् ॥

किंच , भूमप्रकरणएव स्वमहिमप्रतिष्ठितत्व सर्वात्मत्व सर्व कारणत्वादि धर्माणामाम्नातत्वेन धर्मोपपत्तेश्चेति सूत्रेण ब्रह्मणस्सविशेषत्व निर्धारणेनच । प्रकृतसूत्रभाष्ये - सत्यत्वम् । स्वमहिमप्रतिष्ठितत्वम् । सर्वगतत्वम् - सर्वात्मत्वमितिचैतेधर्माश्श्रूयमाणाः परमात्मन्येवोपपद्यन्ते नान्यत्रेति परैर प्यवशतोनिगदितत्वेनच भूमविद्याया स्तद्घटितस्य छान्दो ग्यस्यवा नसुतरां निर्विशेषब्रह्मबोधकत्वं सिध्यतीतिविशदम् ॥

अपिच - यदिद मस्मि न्ब्रह्मपुरे दहर म्पुण्डरीकम् वेश्म दहरोस्मि न्नन्तराकाश स्तस्मि न्यदन्त स्तदन्वेष्ठव्य न्तद्वावजिज्ञासितव्य मिति ब्रह्मोपासनां विदधती सविशेषशिवाद्वैतमेव राद्धान्तयति ॥

नन्वत्र दहाकाशवासिनः प्रत्यगात्मनो ज्ञेयत्वेन श्रूयमाणतया तेन जीवपरयो रभेदएव ग म्यत इतिचेन्न । दहरोऽस्मि न्नित्यादिवाक्यस्य अ.दित्यमण्डलादिवदुपास्याधारत्वेनोपन्यस्ते दहराकाशे ब्रह्मोपासना विधायकत्वात् ।

नच , तद्वावजिज्ञासितव्य मित्युपासनाफलरूपे तत्साक्षात्कारे

विधिसरूपं वाक्यम् । अतएव । छान्दोग्यभाष्यम् - तस्मि न्नाकाशाख्य ब्रह्मणि यदन्तर्मध्ये तद्भाव तदेव विशेषेण जिज्ञासितव्यं ज्ञातुमेष्टव्यं गुर्वाश्रयणाद्युपायै रन्विष्य साक्षात्करणीयमिति । तस्मा न्नेदमुपासना परमिति दीक्षितवरै रुक्तमितिशंक्यम् ॥ श्रु ॥ दहं विपाप म्परवेश्मभूतं यत्पुण्डरीक म्पुरमध्यसग्ंस्थम् । तत्रापिदह्न ङ्गगनं विशोकस्तस्मि न्यदन्त स्तदुपासितव्यमिति महोपनिषदि । हृत्पुण्डरीकं विरजमित्यारभ्य उमा सहाय म्परमेश्वर म्प्रभु न्त्रिलोचन न्नीलकण्ठ म्प्रशान्तं ध्यात्वेतिकैवल्येच परमेश्वरस्योमासहायस्य दहरपुण्डरीकमध्यवर्तित्वेन उपास्यत्वप्रसिद्धेः दहराधिकरणे । प्रसिद्धेरिति सूत्रेण निर्धारितत्वेन अस्याः परमेश्वरो पासनाविधायकत्वावगमेन बहुश्रुतिसूत्रोपरुद्धस्य परपरिकल्पितविपरीतार्थ स्याऽनुपादेयत्वात् ॥

इतरच्च - श्रु ॥ यथाहिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो नविन्देयुरेवमेवेमास्सर्वाः प्रजाः अहरहर्गच्छन्त्यएतम्ब्रह्मलोक न्नविन्द न्त्यनृतेनहि प्रत्यूढाः इतिवाक्यशेषे परब्रह्मणि सर्वेषाम् क्षेत्रज्ञाना महरहस्सुषुप्तिकालेगमन निरूपणेन भेदानुगत दृष्टान्तेनच परमेश्वरञ्जीवा द्भिन्नमेवराद्धान्तयन्ती शुद्धाद्वैतपक्ष म्प्रतिक्षिपति ॥

एतच्च , अथय आत्मासंसेतुर्विधृतिरेषां लोकानामसम्भेदाय । एषसर्वेश्वर एषभूताधिपतिरेषभूतपाल एषसेतुर्विधरण एषां लोकानामसम्भे दाय इत्यादिवचनै र्दहरोपास्यस्य परमेश्वरस्य जगद्विधारकत्वरूप धर्मव त्वेन दहराधिकरणे — सू ॥ धृतेश्चमहिम्नोऽस्या ऽस्मिन्नुपलब्धेरिति सूत्रे निर्धारितत्वेन परे निर्विशेषत्वनामिन्नरो जिज्ञासिते ब्रह्मणि दहरविद्यो

क्तधर्माणा मसम्भवादपिदहरविद्यायाः परमेश्वरपरत्वा वगमेन निर्गुण ब्रह्मपरत्वस्यवा - अनीश्वरदेवतान्तर परत्वस्य वाऽसिद्धेश्च छान्दोग्य निग दितायादहरविद्याया स्सविशेष शिवाद्वैत प्रतिपादन परत्वावगमेन नम तान्तरानुगुणत्व श्रमावकाश इत्यनवद्यम् ॥

इदंच - अस्मिन्प्रकरणे - अस्मिन्कामास्समाहिता एष आत्माऽपहतपाप्मा विजरोविमृत्युर्विशोको विजिघित्सोऽपिपासस्सत्यकाम स्सत्यसङ्कल्प इत्यनन्त माङ्गल्यगुणरत्नाकरत्वस्या म्नानेनच प्रकृतविद्या निर्गुब्रह्मवादिना म्परिपन्थिनीति विज्ञायते ॥

ननु , जीवस्याप्यपहत पाप्मत्वादिगुणान् दहरवाक्या दुत्त रस्मात् ' यआत्माऽपहतपाप्मा विजरो विमृत्युरित्यादि प्रजापति वाक्या दुपदिशन्ती - ततोजीवपरयो रभेदम्बोधयतीतिचेन्न । सू ॥ उत्तराच्चेदा विर्भूत स्वरूपस्तु इतिवैयासिक सूत्रेण जीवे अपहतपाप्मत्वादि गुणयो- गस्य मुक्त्यवस्थाया म्परञ्ज्योति रुपसम्पद्य पश्चादाविर्भूतापहत पाप्मत्वादिगुणकतया सम्भावितत्वं राद्धान्तयता भगवतासूत्रकृतैव जीवे श्वराभेद भ्रमस्य निराकृतत्वात् ॥

एवञ्च । प्रकृतश्रुति सूत्राभ्याम् ब्रह्मणि मुक्तजीवेच निर्धारि तस्या ऽपहतपाप्मत्वादि गुणयोगस्य निर्गुणतया स्वाभिमते ब्रह्मणि तादृशब्रह्मभावापन्ने जीवेवा असम्भावितत्वेनच प्रकृतश्रुत्याः केवलाद्वैत परिपन्थित्वावगमेन सविशेषशिवाद्वैतपरत्व मविचलमित्यलम् ॥

## —॥ बृहदारण्योपनिषद्विचारः ॥—

ननु , बृहदारण्योपनिषत् केवलाद्वैतपरा ।

तथाहि । तत्र तृतीयाध्याये चतुर्थब्राह्मणे - ब्रह्महवा इद मग्र आसी त्तदात्मान मेवा ऽ वैत् । अह म्ब्रह्मास्मीति । तस्मा त्तत्सर्व मभ वत् । तद्योयोदेवाना म्प्रत्यबुध्यत । सएव तदभव त्तथा ऋषीणा न्तथा मनुष्याणाम् । तद्धैत त्पश्य नृषि र्वामदेवः प्रतिपेदे ऽ ह म्मनु रभ वगं सूर्यश्चेति तदिद म प्येतर्हि यएवं वेदा ऽ ह म्ब्रह्मास्मीति सइदगं सर्वभवति तस्यह नदेवाश्च नाभूत्या ईशते अत्मा ह्येषां सभवति । अथ यो ऽ न्या न्देवता मुपास्ते ऽ न्योसा वन्योऽह मस्मीति नसवेद यथा पशुरिति ॥ अत्रा ऽ ह म्ब्रह्मास्मीति जीवब्रह्मैक्यस्य प्रतिपादितत्वेन यो ऽ न्यामिति जीवेश्वरभेदज्ञानस्य निन्दितत्वेनच शुद्धाद्वैतपरत्व प्रतिपत्ते रितिचे न्न ।

अत्र , तदात्मानमेवा ऽ वैत् । अहम्ब्रह्मास्मीत्यस्यब्रह्मवाक्य त्वेन तस्यजीवब्रह्मैक्यसाधकत्वाभावात् । ततोपि यएवंवेदाहं ब्रह्मास्मी त्युपदिष्टस्या ऽ भेदस्य ' यो ऽ न्यान्देवतामुपास्ते इतिवाक्यशेषेण उपा सनाविषयत्वावगमेन पारमार्थिकत्वाभावसिध्या जीवब्रह्मैक्यभ्रमस्य निर्धू तत्वात् । अतएव । इन्द्रप्राणाधिकरणे – मामुपास्वे तीन्द्रवाक्यस्य शास्त्रदृष्ट्यातूपदेशो वामदेववदिति वामदेववाक्योदाहरणं सङ्गच्छते ।

अन्यथा । मा मुपास्वे तीन्द्रवाक्य स्योपासनाविषयत्वेन वाम देववदिति सूत्र मसङ्गतं स्यात् । ततएव चा ऽ स्मि न्नधिकरणे

भगवत्पादैः वेदान्तविज्ञानोपलब्धया ब्रह्मात्मसामरस्यभावनया ब्रह्मभाव मुपगतस्य विगळितमनुष्यादिदेहविषयकल्पिताहम्भावसंकोचस्य सम्पन्न विश्वाकारपराहम्भावस्य वामदेवस्य स्वात्मन स्सर्वगतत्वावगमा न्मनु सूर्यादिप्रपञ्चभावोक्तिः । एव मिन्द्रस्यापीति निश्चीयते प्राणो ऽस्मि प्रज्ञात्मेति प्राणशब्देन परं ब्रह्मोच्यते । तस्यानन्दरूपत्वेन सकलप्राण नहेतुत्वात् । प्राणएव प्रज्ञात्मानन्दो ऽजरो मृतइति श्रवणात् ।

तथाच। अहं ब्रह्मास्मि मामुपास्वेति ब्रह्मदृष्ट्योपदेशः । तथाहि- श्रीकृष्णादयो प्यर्जुनादी नुपदिष्टवन्तः । ब्रह्मज्ञानोपासनया ब्रह्मभाव मुपगतस्य विगळितजीवभावस्य तद्रूपदृष्ट्या स्वस्मि न्नुपास्यत्वसर्वात्म त्वोपदेशो युक्तइत्यादिना समर्थितम् । नन्वत्र चतुर्थाध्यायेबालाकि ब्राह्मणेब्रह्म ते ब्रुवाणीति प्रतिज्ञाय तौह सुप्त म्पुरुष माजग्मतु स्तंहा जातशत्रुरामन्त्रयांचक्रे ब्रह्मन् पाण्डरवास स्सोमराजन्निति । सह तूष्णी मेव शिश्ये तदुह एनं यष्ट्या व्याचिक्षेप सततएव समुत्तस्था वित्यत्र प्राणनाम्नामन्त्रणेपि तदश्रवणेन ततःपरं यष्टिघाते स त्युत्थानेनच प्राणाद्यतिरिक्तो जीवो वेदितव्यपुरुषतया ऽवगम्यते ॥

तथाहि । अजातशत्रुणा वेदितव्यत योपदिष्ट स्यादित्यादिपुरुषाणा ङ्कर्तु र्वेदना योद्युक्त म्बालाकिम्प्रति बुबोधयिषु रजातशत्रु स्सुप्त म्पुरुष म्प्राणनामभि रामन्त्रय सुषुप्तिकाले सव्यापारस्यापि प्राणस्य भोक्तृत्व म्प्रतिषिध्य यष्टिघाते नोत्थापनात् तद्व्यतिरिक्त ञ्जीव म्प्रत्यबोधयदिति श्रूयते । तेन प्राणव्यतिरिक्तः यष्टिघाते नोत्थापितो जीवो ऽत्र वेदितव्य पुरुषत्वे नोपदिष्टइति सूचनेन वेदितव्यपुरुषस्य ब्रह्मत्वान्यथानुपपत्त्या

तया जीवब्रह्मणो रभेदस्य ज्ञापितत्वा दिय मुपनिषत् शुद्धाद्वैतसाधि केतिचे न्न ॥

तत्र । जीवस्य सुषुप्तिदशाया म्ब्रह्माधारत्वप्रतिपादनेन जीव ब्रह्मणोः भेदनिरूपणमुखेना ऽ भेदभ्रान्ते र्निर्धूतत्वात् ॥

तथाहि । अजातशत्रुर्नाम काशिराजःस्वसमीपमागत्य ब्रह्म ते ब्रुवाणी त्युक्तवन्त म्बालाकि ङ्गार्ग्यम् सहस्र न्दद्म एतस्यां वाचि जनको जनकइति जना धावन्तीति प्रशस्य , बालाकिना , यएवैष आदित्ये पुरुष स्तमेवा ऽ ह मुपास इत्यादिभि र्वाक्यै र्ब्रह्मत्वे नोपदिष्टा नादित्यचन्द्र विद्युतस्तनयित्न्वादिगता न्पुरुषा नब्रह्मत्वेन तदुक्त्यनन्तरमेव प्रत्याख्याय तत स्तूष्णीम्भूते तस्मिन् , कि मेतावदेव तवज्ञानमिति पृष्टवा तेनैतावदेवे त्यभिहिते ' मृषावै किल मा समावादयिष्ठाः ब्रह्म ते ब्रुवाणी त्युक्त्वा त मपनोद्य योवै बालाक एतेषा म्पुरुषाणा ङ्कर्ता कस्य वै तत्कर्म सवेदि तव्य इति स्वय मुपदिदेश । अत्र यो वेदितव्य उपदिष्टः उपसंहारेच स पूर्वा नात्मनोऽपहत्य सपूर्वेषांच भूतानां श्रैष्ठ्यं स्वाराज्य माधिपत्य म्पर्येति यएवं वेदेति तद्वेदनस्यफलं वर्णितम् । यष्टिघा तेन सुप्तपुरुषोत्थापनानन्तरम् ' क्वैष एतद्बालाके पुरुषोऽशयिष्ट । क्ववा एत दभूत् । कुत एत दागादिति राज्ञा गार्ग्यम्प्रति कृतः प्रश्नः । यद्यपि यत्राऽशयिष्ट तत्रैव यावत्प्रबोध मभूदिति प्रबोध्यमान स्ततए वागादिति चार्था त्सिध्य न्त्यर्थो नपृथ क्प्रश्न मर्हति । तथापि जीवस्य सुषुप्तेः प्राक् स्वपतोऽधिकरणतया सुषुप्तस्य यावत्प्रबोध मधिकरणतया यष्टिघाते नोत्थापनानन्तरं तदुत्थानापादानतया जीवाधिकरणं परमेश्वरसद्भाव

न्हढीकर्तु न्त्वेथा प्रश्नः कृतः । गार्ग्येपृष्टं सुषुप्तजीवाधिकरण मविजानति ‘ हिता नाम हृदयस्य नाड्य इत्यादिना तासु तदा भवति । ‘ यदा सुप्त स्स्वप्न न्नकंचन पश्यती त्यन्तेन ‘ तत्रैत त्सुप्त स्समस्त स्सम्प्रसन्न स्स्वप्न न्नविजानाति तासु तदा नाडीषु सृप्तो भवति । ताभिः प्रत्यव सृप्य पुरीतति शेते इत्यादि श्रुत्यन्तरानुसारात् जीवसुषुप्त्यधिकरणं हृदया वच्छिन्न म्ब्रह्म प्राप्तुर्मार्गे तदधिगन्तव्यासु नाडी षूपसर्पण मुक्त्वा ‘ अथाऽस्मि न्प्राणए वैकधा भवतीति राज्ञैव कृतं स्वपृष्टार्थविवरणं । तस्य व्याख्यान मिदंच सुषुप्तजीवस्य ब्रह्मणि लयप्रतिपादकम् । ‘ सता सोम्य तदा सम्पन्नो भवतीति श्रुत्यन्तरसमानार्थत्वात् तथाचाऽस्मि न्वेदितव्यतया उपदिष्टे परब्रह्मणि जीव स्सुषुप्तौ लीनोभवतीति तदर्थस्य गृह्यमाणत्वेन सुषुप्तिदशाया ञ्जीवस्याऽधिकरणतया ब्रह्मणो जीवा दर्थान्त रत्वेन विविच्य निर्धारणेन जीवब्रह्मैक्यभ्रन्तिनिर्धूनना द प्यस्या निषद स्सविशेषशिवाद्वैतप्रतिपादनपरत्व मव्याहतम् ॥

किञ्च । अस्यामे वोपनिषदि पंचमाध्याये सप्तमब्राह्मणे–श्रु।। यः पृथिव्या न्तिष्ठन् पृथिव्या अन्तरो यम्पृथिवी नवेद यस्य पृथिवी शरीरं यःपृथिवी मन्तरो यमय त्येषत आत्मान्तर्या म्यमृतइति । यो विज्ञाने तिष्ठन् विज्ञाना दन्तरो यं विज्ञान न्नवेद । यस्य विज्ञानम् शरीरं योविज्ञान मन्तरो यमयत्येषत आत्मान्तर्यामीतिच जीवा त्परब्रह्म णोऽर्थान्तरत्वप्रतिपादनेनचिदचिदीश्वराणां शरीरशरीरिभावोपदेशेन चेय मुपनिष त्सविशेषशिवाद्वैतप्रतिष्ठापनपरैवेति सिध्यति ।।नचा ऽ न्तर्यामि ब्राह्मणस्या ऽ संसार्यात्मपरत्वेन जीवब्रह्मणो र्भेदप्रतिपादकत्वाभावा न्नात्मै

कत्वनिरूपणपर शुद्धाद्वैतहानिरिति वाच्यम् । अन्तर्याम्यधिकरणे । सू॥ उभयेपिहि भेदेनैन मधीयंतइति सूत्रेण काण्वमाध्य न्दिनरू पोभयशाखिं भिरपि ब्रह्मण श्शारीरा द्भिन्नत्वेना ऽ धीयमानतया ऽ र्थान्तरत्वनिर्धारणेना ऽ न्तर्यामिब्राह्मण स्यात्मैक्यपरत्वभ्रमवारणात् ॥

अपिचा ऽ त्र । अष्टमूर्त्यसाधारण सर्वान्तर्यामित्वरूपलिङ्गेन देवतान्तरभ्रान्तिनिराकरणद्वारा शिवस्यैव परब्रह्मत्वनिर्धारणेन चेयमुप निषत् सविशेषशिवाद्वैतपरैवेति दिक् ॥

न न्वस्यामे वोपनिषदि मैत्रेयीब्राह्मणे– श्रु ॥ नवा ऽ रे पत्युः कामाय पतिः प्रियो भवतीत्यारभ्य । आत्मावा ऽ रे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यइति श्रुतौ आत्मनस्तु कामा येत्यादिवाक्यैः भोगप्रीतियुक्ततया आत्मन स्संसारित्वावगमेन जीवस्यैव द्रष्टव्यतया पर्यवसाना ज्जीवब्रह्मणो रभेदः प्रतिपादित स्तस्मा दिय मुपनिष त्केवलाद्वैतपरैवेतिचे न्न । आत्मनस्तु कामा येत्यादिवाक्यै रुपक्रम प्राबल्याद् द्रष्टव्यतया निर्दिष्ट स्यात्मनो जीवपरत्व माशंक्य भगवता सूत्रकृता वाक्यान्वयाधिकरणे । श्रु॥ अमृतत्वस्यतु नाशास्तिवित्तेन , आत्मनिख ल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विज्ञातम् । इद सर्वं यदयमात्मा । ये नेदं सर्वं विजानाति तत्केनविजानीया दित्या दिभि र्बहुभिर्ब्रह्मलिङ्गबोधकै र्वाक्यै र्ब्रह्मपरत्वस्यनिर्धारितत्वात् ॥

तथाहि । मैत्रेयीब्राह्मणे - याज्ञवल्क्यः प्रविव्रजिषया मैत्रेयी कात्यायन्यो स्स्वभार्ययो र्वित्तविभागं चिकीर्षन् वित्तेन किममृतत्व म्प्राप्तुं शक्यमिति मैत्रेय्या पृष्टो ' यथै वोपकरणवतां जीवितं स्तथैव

ते जीवितं स्यात् । अमृतत्वस्यतु नाशास्ति वित्तेनेत्युक्त्वा । 'येनाऽह न्नामृतास्या क्किमह न्तेन कुर्यां यदेव भगवा न्वेद तदेव मे ब्रूहीति तया पुन रमृतत्वसाधन म्पृष्टो 'नवारे पत्युः कामाय पतिः प्रियो भवति । आत्मनस्तुकामाय पतिः प्रियोभवती त्यादिभिः नवारे सर्वस्य कामाय सर्वं म्प्रिय म्भव त्यात्मनस्तु कामाय सर्वं म्प्रिय म्भवती त्यन्तैः वाक्यैः पतिजायापुत्रमित्रपश्वादि सर्वम् भोगार्थतयैव प्रिय म्भवति । त म्पत्यादि सर्वभोक्तार मात्मान मुपक्रम्य 'आत्मावारे द्रष्टव्य श्श्रोतव्यो निदिध्यासि तव्यइ त्यमृतत्वसाधन मात्मदर्शनं दर्शनसाधनानि श्रवणादीनि चोपदिश्य 'आत्मनि खल्वरे दृष्टेश्रुते मते विज्ञाते इदं सर्व म्विदितमि त्यात्मविज्ञानेन सर्वविज्ञानमुक्त्वा'एताव दरे ख ल्वमृतत्वमिति वर्णितस्यैत स्यात्मनो वेदन ममृतत्व साधन मुपसञ्जहारेति श्रूयते ॥

अत्र। आत्मावारे द्रष्टव्यइत्यादिना निर्दिष्ट स्ताव दात्मा परमेश्वरइत्यवगम्यते । अमृतत्वार्थिन्यै तद्दर्शनाद्युपदेशात्त द्विज्ञानेनाऽमृत त्ववर्णना त्तस्य सकलप्रपंचोपादानत्वप्रतिपादनाच्च ॥

ननु । ये नेदंसर्वं विजानाति त ङ्केन विजानीयात् विज्ञातार मरे केन विजानीयादि त्यवसानस्य जीवपरत्व म्प्रतीयत इतिचेन्न । तस्यापि परमेश्वरपरत्वाव्यभिचारात् । तथाच जीवः स्वान्तर्यामितया स्थितेन येन परमेश्वरेण वितीर्णज्ञानशक्तिकस्स न्निदं स्सर्वंविजानाति त म्परमेश्वर ङ्के नोपायेन विजानीयात् । सर्वस्य विज्ञातार न्तंपरमेश्वर ङ्के नोपायेन विजानीयात् । तद्दर्शनेन तत्प्रसादहेतु म्प्रागुक्तं श्रवणमनन पूर्वक मुपासन मेक मुपायं विहाय नकिंचि द्युपायान्तर मस्ती

त्यभ्यासेन प्रतिपाद्यमान न्दुरधिगमत्वलिंग न्दर्शितम्। एवमिदं वाक्यं भेदपक्षएव सुसगतम्। जीवस्य ब्रह्माभेदेन प्रस्तुतत्वाङ्गीकारेतु येनेतितृतीया प्रथमार्थे योजनी येति क्लेश स्स्यात्। तस्मा दवसानस्य कृत्स्नस्य परमेश्वरपरत्वेन द्रष्टव्यत्वे नोपदिष्ट आत्मा परमेश्वरएवे त्यनवद्यम् ॥

नचा ऽ त्र पतिजायादिवाक्ये भोगप्रीतियुक्ततया जीवस्या ऽ नुवादः उत्तरवाक्येषु मुमुक्षुद्रष्टव्यत्वादिना परमेश्वरस्य प्रतिपादनमि त्युभयो रेकवाक्यता नघटतइति शंक्यम्। यस्मा त्पतिजायादयः पतिजायादि प्रयोजनाय प्रिया नभवन्ति किन्तु स्वप्रयोजनायैव तस्मा द्यस्या ऽ मृतत्व रूपस्वप्रयोजनस्य पतिजायादिविषयो रागः प्रतिकूल स्तस्य सिद्धि मपेक्षमाणेन पतिजायादिभ्यो विरज्य परमेश्वरएव द्रष्टव्यइ त्यर्थकतया उभयो रेकवाक्यताया स्सुघटितत्वात् ॥

नन्वेवंसति। एकस्यै वात्मशब्दस्य पतिजायादिवाक्यगतस्य जीवो ऽ र्थः तदुत्तरवाक्यगतस्य परमेश्वरइ त्यर्थभेद स्स्यादितिचे न्न। पति जायादि वाक्यगतस्य जीवपरत्वे द्रष्टव्यवाक्यगतस्य यदाचर्मवदाकाशमि त्यादिश्रुत्यन्तरानुसारेण परमेश्वरपरत्वे चावश्यवक्तव्ये सू॥ स्याच्चैकस्य ब्रह्मशब्दवदिति न्यायेन तदर्थभेदा ऽ ङ्गीकार स्योचितत्वात्॥

ननु। सर्वविज्ञानप्रतिज्ञादिक म्परमेश्वरविषयमेव भवतु। तथापि। यथा सैन्धव घनो ऽ नन्तरो ऽ बाह्यः कृत्स्नो रसघनः एवं वा ऽ रे ऽ य मात्मा ऽ नन्तरो ऽ बाह्यः कृत्स्नः प्रज्ञानघनए वैतेभ्यो भूतेभ्य स्समुत्थाय तान्येवा ऽ नुविनश्यति नप्रेत्य संज्ञा ऽ स्ति। अवि नाशीवा ऽ रे ऽ यमात्मा अनुच्छित्तिधर्मा इति वाक्येनतु जीवएव प्रतीयतइ

त्यविवादम्। एतेभ्यो भूतेभ्य स्समुत्थाय तान्येवा ऽनुविनश्यतीति देहाकारपरिणत भूतोपाधि कोत्पत्तिविनाशवत्ववचनात् ' नप्रेत्यसञ्ज्ञा स्तीति मोक्षदशाया न्देहाकारपरिगतभूतसंघाते नैकीकृत्य देवो ऽह म्मनुष्यो ऽह मि त्यादिज्ञानं संसारदशायामिवा ऽस्य नास्ती त्युपन्या साच्च। तस्माज्जीव मनूद्य परमेश्वरलिङ्गै रुपसंहारेण जीवेश्वरयो रभेदः प्रतिपादितइतिचे न्न, जीवेश्वरभेदस्य प्रबलानेकश्रुत्यन्तरसिद्धत्वेन तद्वि रुद्धस्याऽभेदस्य प्रकृतश्रुतिप्रतिपाद्यत्वासम्भवेन प्रकृते जीवानुवादस्य जीवा द्विविच्य परमेश्वरस्वरूपप्रदर्शनार्थत्वएव तात्पर्यस्य समुचितत्वात्॥

प्रकृतश्रुतौ जीवानुवादकारणस्य भगवता सूत्रकारेणैव वाक्या न्वयाधिकरणे मतान्त रोपन्यासपूर्वक न्निर्धारितत्वेन तद्विरुद्धार्थस्य ग्रह णानौचित्याच्च॥ तथाहि। सू॥ प्रतिज्ञासिद्धे र्लिङ्ग माश्मरथ्यः॥ सर्वविज्ञानस्य प्रतिज्ञासिध्यर्थस्य जीवपरमेश्वरयोः कार्यकारणभावकृत स्यैक्यस्य लिंगं। तद्ज्ञापनार्थं जीववाचिशब्दैः परमेश्वराभिधानमि त्याश्म रथ्यमतम्॥ सू॥ उत्क्रमिष्यतए वम्भावादि त्यौडुलोमिः॥ संसार दशाया ञ्जीवस्य परमेश्वराद्भेदेपि मोक्षदशाया न्तद्भावप्राप्तेः जीवशब्दैः परमेश्वराभिधानमित्यौडुलोमिमत ञ्चोपन्यस्य। अवस्थितेरिति काशकृत्स्नः॥ श्रु॥ यो विज्ञाने तिष्ठन्। श्रु॥ य आत्मनि तिष्ठन्नि त्यादिश्रुतेः जीवा त्मनि परमेश्वर स्यात्मतयाऽवस्थानात्। जीवे ष्वन्तर्यामितया परमेश्वर स्याऽवस्थिते स्तन्नियम्यत्वेन तच्छरीरभूतानाञ्जीवानां शब्दाः शरीरिपर मेश्वर पर्यन्ताः। अतो जीवशब्दैः परमेश्वराभिधानमिति काशकृत्स्नमतं स्वाभिमतत्वेन प्रदर्शितम्॥

ननु । परस्परविरुद्धे ष्वेतेषु सूत्रकारस्यऽभिमत मिदमेवेति कथ । न्निर्धार्यत इतिचेत् - उच्यते । जीवाना ङ्कार्यत्वस्य सू ॥ नात्मा श्रुते र्नित्यत्वाच्च ताभ्यइ त्यधिकरणे निराकरिष्यमाणत्वात् । मुक्ता वागन्तुकरूपाभिनिष्पत्तेः सू ॥ सम्पद्याविर्भाव स्स्वेनशब्दादि त्यधिकरणे निरा करिष्यमाणत्वात् सर्वशब्दाना म्परमेश्वरपर्यन्तत्वस्य चराचरव्यपाश्रयस्तु स्यादित्यधिकरणे प्रसाधयिष्यमाणत्वात् । मतान्तरस्या ऽ नुपन्यासाच्च काशकृत्स्नमतमेव सम्मतं सूत्रकृतइ त्यवगम्यते ॥

ननु । यद्यपि काशकृत्स्नमतमेव सूत्रकर्तु स्सम्मतमि त्युक्तं सत्यम् ।तथापि-तत्र-परमेश्वरस्य न जीवशरीरकत्व न्निर्धारितम् ॥

तथाहि । न्यायरक्षामणौ - सू ॥ अवस्थितेरिति काशकृत्स्नः ॥ रज्जोरेव भुजङ्गरूपेणेव । व्याधकुलसंवर्धितस्य राजपुत्रस्यैव व्याधभावे नेवच परमात्मनएव जीवभवेना ऽ वस्थितेरि त्यारभ्य – केचित्तु अत्र त्यावस्थितेरिति पदस्य य आत्मनि तिष्ठन्निति श्रुत्युक्ताया ञ्जीवात्मनि परमात्मन स्थितौ स्वारस्य म्मन्यमानाः परिदृश्यमाने शरीरे जीवात्मन इव जीवात्मनि परमात्मन आत्मतया ऽ वस्थितेः जीवशब्देन परमात्माभि धान मुपपन्नमिति सूत्रार्थं वर्णयन्ति । अत्र विपरीतमपिवक्तुं शक्यम् । अस्मिन्नर्थे अवस्थितेरितिपदस्य स्वारस्य न्नास्तीति । तदाहि । स्थितेरि त्येवसूत्रणीयम् । य आत्मनि तिष्ठन्नितिमूलश्रुत्यनुरोधा ल्लाघवाच्च । स्थानादिव्यपदेशादित्यत्र अवोपसर्गाभावाच्च । तस्मा दिहा वोपसर्गसत्वा त्ततोऽन्यएव कश्चि दर्थो विवक्षितः परमात्मनएव जीवात्मभावेना ऽ वस्था नादि त्येवंरूपः । इत्युक्तत्वादितिचेत् उच्यते । निषुणता [illegible] त्व

र्थातिरिक्तार्थप्रदत्वाभावा दवस्थितिपदम् स्थितिपदसमानार्थकमि त्यवश्य मेष्टव्यम् । अथात्र यदिद मवोपसर्ग मवलम्व्य विपरीतार्थग्रहण म्परेषा न्तदसम्मतमेवसुतरां सूत्रकर्तुः । यद्यभेदएवत स्येष्येत तर्हि अवस्थितेरिति नसूत्रयेत् । स्थितेरिति सूत्रणेपि 'परमात्मनएव जीवभावेनस्थिते रि त्यर्थ लाभस्य तुल्यत्वात् । एव म्परपक्षे प्यवोपसर्गस्या ऽ नर्थकतया तस्य य स्स्वाभिलषितार्थप्रदत्वभ्रम स्सनिरस्तएव । तस्मा दभेदएव यदि सूत्र कृत इष्येत तर्हि । अभेदा दित्येव सूत्रणीयम् । रज्जो रेवेत्याद्यध्याहारपरिहा रेण लाघवा दसन्दिग्धत्वाच्च ॥

एवञ्च । सर्वासामपि निषदा म्परमेश्वरमहाविभूतिभूतसर्वात्म त्वनिरूपणएव परम न्तात्पर्य मवार्यम् । अतए वेममर्थ न्निगूढमन्यासु निषत्सु निगदन्ती प्वपीय मन्तर्यामिब्राह्मणेन श्रु।।यःपृथिव्या न्तिष्ठन्नित्यार भ्य योविज्ञानेतिष्ठन्नि त्यन्ते नाश्रावयन्ती चेतनाचेतनात्मकस्य सर्वस्यापि जगतः परमेशितुश्च शरीरात्मभाव मभिव्यञ्जयित्वा सर्वात्मत्वेन जीवशरीर कतयाच जीववाचिशव्दाभिधेय ञ्जीववाचिना प्यात्मशव्देन परमेश्वर न्द्रष्ट व्यंमैत्रेयीब्राह्मणे नोपदेशयति । तस्मा दयमेव सर्ववेदार्थः । अतएवच छन्दोगाना न्निषदपिश्रु ॥ ऐतदात्म्य मिदगुं सर्वमितिप्रतिज्ञायां - सामा न्यतः प्रतिज्ञात मिममर्थं विशेपेण निर्धारयितु म्प्रवृत्तेन - श्रु ॥ सआत्मा तत्वमसीतिवाक्येन श्वेतकेतुरूपस्य जीवस्य परमेश्वरात्मत्व मभ्यासे नोप दिशति । एव ञ्जीवपरयो श्शरीरात्मभावपरमतात्पर्येण प्रयुक्तानि तत्व मसि - प्रज्ञान म्ब्रह्म - आयमात्मा ब्रह्मेत्यादिवाक्या न्यापातप्रतिपन्ना ऽ भेदपरतया विवरीतुकामा भागत्यागलक्षणादिकसृति मनुसरन्तो प्यन्त

र्यामित्राह्मणविवरणावसरे मौनमेव शरणीकुर्वते । तस्मा द्वेदान्तानाम्पर-परिकल्पितः केवलाद्वैतपरत्वरूपोऽनर्थएवे त्यलम् ॥

अतएवोक्त मस्मदीये श्रीनीलकण्ठविजये

श्लो ॥ चत्वार्येव समाश्रितानि भवता वाक्यानि वेदान्तगा
न्यत्रा प्यन्वयसिद्धये ऽ ह्यगतिका सम्मानिता लक्षणा
साप्यर्धञ्जरतीव वल्लभतमा संत्यक्तभागा पुन
र्नैते किं म्प्रतिबोधयन्ति भवतः पक्षस्य दोषोदयं ॥

किंच , अथयदि सूत्रकारः जीवपरयो रभेद म्मनसिकृत्य बहु ष्वधिकरणान्तरेषु भेदव्यपदेशा च्चेत्यादिना कण्ठरवेण भेद मुद्घोषयन् प्रकृताधिकरणे ऽ न्योपसगमात्रेणा ऽ भेदं व्यवक्ष्यत् तर्हि स्फुटम्प्रतारक पीठ मध्यरोक्ष्यत् । तस्मा त्परपरिकल्पितो ऽ र्थ स्सूत्रकृतो ऽ थ काश कृत्स्न स्योत श्रुतीनांवा सम्मतः पर मसम्मतएव य आत्मनितिष्ठन्नित्या दिसर्वश्रुतीना म्बादरिवर्ज मखिलाना म्महर्षीणा मपी त्यल म्बहुना ॥

अपिच । अवस्थितेरितिसिद्धान्तयतः काशकृत्स्नस्यवा ? एनमे व परमराद्धन्ततया निबध्नतआचार्यस्यवा श्रु। योविज्ञानेतिष्ठन् य आत्म नितिष्ठन् ।।श्रु।। तमात्मस्थं येनुपश्यन्तिधीरा इत्याद्यनन्त श्रु त्युपदिष्टे अत्मनिस्थितेरित्यर्थएव तात्पर्यग्रहणमुचितं । नतुक्वचिदप्यश्रुते राजपुत्त्र-स्यैव व्याधभावेनेवच परमात्मनएवच जीवभावेना वस्थितेरित्यर्थे आस्ति क्यप्रतिपालनाय ॥

नच । श्रु ॥ अनेनजीवेनात्मना इतिश्रुत्यर्थः परपक्षस्य साधक इतिशंक्यम् । तद्साधकत्वस्य तैत्तिरीयविचारे सुनिरूपितत्वात् । तस्मा त्परोक्तन्दुरुक्तमेवेतिदिक्

अतएव मोक्षधर्मपर्वणि जनकयाज्ञवल्क्यसंवादे ॥

श्लो ॥ पश्यं स्तथैवा ऽ पश्यंश्च पश्य त्यन्य स्तथानघ ।
षड्विंशः पञ्चविंशश्च चतुर्विंम्शश्च पश्यतीति ॥

चतुर्विंशपञ्चविंशतत्वरूपयो र्जडच्चेतनतया परस्परविलक्षणयोः प्रकृतिपुरुषयो र्द्रष्टारं परमात्मान मुपक्रम्य । यदातु मन्यते ऽ न्योह मन्य एष इतिद्विज । तदा स केवलीभूत प्षड्विंश मनुपश्यतीति प्रकृति पुरुषविवेकज्ञानानंतरं जीवविलक्षणपरमात्मज्ञान मुक्त्वा ' अन्यश्च राजन्स परस्तथान्यः पञ्चविंशकः । तत्स्थत्वा दनुपश्यन्ति एकए वेतिसाधवइति परमात्मनो जीवस्थत्वनिवन्धन ऐक्यव्यवहारइतिप्रदर्श्य 'तेनैतन्नाभिजानन्ति पञ्चविंशक मच्युतमिति जीवस्थत्वादेव हेतो र्जीवस्य परमात्मन श्चाच्युत शव्दवाच्यस्य स्वरूपैक्यं साधवो नपश्यन्ती त्युपन्यस्य जन्ममृत्युभया द्भीता स्साङ्ख्या योगाश्च काश्यप । षड्विंश मनुपश्यन्ति शुचय स्तत्परायणाः । यदा स केवलीभूत प्षड्विंश मनुपशति । तदा सर्वंथि सिद्धत्वा न्नपुन र्जन्मविन्दतीति प्राज्ञानां पंचविंशविलक्षणषड्विंशदर्शन न्तद्धत स्ततो ऽ पवर्गं चोपदिश्य । एव मप्रतिवुद्धश्च वुध्यमानश्च ते ऽ नघ । अर्थश्चोक्तो यथातत्वं यथाश्रुति निदर्शना दिति प्रकृति पुरुषपरमात्मानः परस्परवैलक्षण्येन निरूपिताइ त्युपसंहृतम् । एवं सूत

कारेणैव प्रबन्धान्तरे तत्स्थत्वनिबन्धन एकत्वव्यवहारइति समर्थितम्। तस्मा दवस्थितिपदं स्थितिपदसमानार्थकमेव । ततो यथोक्तएव वेदार्थइ त्यलम् ॥

नन्वत्र । उच्यतइत्यारभ्य जनकयाज्ञवल्क्यसंवादोयं प्रकृति विविक्तजीवयाथात्म्यनिरूपणे पर्यवसितः । नतु तदुभयातिरिक्त परमात्म स्वरूपनिरूपणेपि तात्पर्यवानिति श्रीदीक्षितेन्द्रैर्न्यायरक्षामणौ प्रसाधितः कथ मय प्परमेश्वरस्य जीवनिष्ठतां प्रसाधयेदितिचेत् ॥

उच्यते । जनकयाज्ञवल्क्यसंवादो ऽयम् प्रकृतिपुरुषविवेक पूर्वकतदतिरिक्तपरमेश्वरस्वरूपनिरूपणे तात्पर्यवानेव नतुप्रकृतिविविक्त जीवयाथात्म्यनिरूपणमात्रपर्यवसितः । अन्यथा ॥ सू ॥ ज्ञेयत्वावचना च्च । तन्निष्ठस्य मोक्षोपदेशात् । मुक्तोपसृप्यव्यपदेशा दित्यादिना प्रकृतिपुरुषयोः ज्ञेयत्वादिकं प्रतिषिध्य ब्रह्मणो ज्ञेयत्व म्प्रतिज्ञाय स्मृत्यनवकाशदोषप्रसङ्गइत्यादिना साङ्ख्यदर्शनंनिराकुर्वता सूत्रकृता स्वो- पज्ञमीमांसार्थोपबृंहणार्थ म्प्रबद्धस्याऽस्य संवादस्य नैरर्थक्यापत्तेः । ननु, यद्येव न्तर्हि प्रकृतसंवादीयदीक्षितेन्द्रकृतप्रसाधनस्य कागति रितिचे त्तैस्तत्रै व स्वोदितार्थस्याऽनर्थत्वस्फोरणा त्स्वीयगोष्ठ्येव गतिः। तथाच-यदातुमन्यतेऽ न्योह मितिश्लोकः प्राक्पठितेन यदातुमन्यते इतिश्लोकेन समानर्थो ग्राह्य इतिवचनेन तस्यार्थस्योक्तार्थतया नैरर्थक्य मावेदितम् ॥

ननु - उपक्रमे परमात्मनः प्रश्नो नदृश्यतइ त्युक्तम् । कथ न्त दपृष्टप्रतिपादनं सङ्गच्छता मितिचे न्न, मीमांसायां ब्रह्मण्येव जिज्ञा स्यतया प्रतिज्ञातेपि यथा तद्ज्ञानाय प्रकृतिजीवयोरपि । तथा प्रकृतेपि तत्वत्रयस्यापि प्रतिपाद्यत्वानिवारणात् । एतेन विश्वावसुना पञ्चविंशं

यदेतच्चेत्यादिना पञ्चविंशस्यैव स्वरूपे पृष्टेसति तत्कथं पञ्चवंशविल क्षणपरमात्मपरं स्या दित्युक्त मपास्तम् , प्रश्ने यदेतच्चेत्यादिना परमात्म नोपि प्रश्नविषयत्वप्रतीतेः ॥

किंच , अन्यश्च राज न्परम स्तथान्यःपंचविंशकइति जीवेश्वरयो र्भेदस्य कण्ठरवे णोद्घोषितत्वाच्च । यद्य प्ययमपि श्लोकः पूर्वोक्तश्लोकेन समानार्थकत्वग्रहणेना नर्थक्यमेव नीत स्तथाप्येवं प्रकृतसंवादीयश्लोकाना मानर्थक्यप्रणयनमेव तदीयपक्षस्य प्रमाणविपक्षतान्निर्धारयतीति ग्रंथविस्तर भयाद्विरम्यते ॥

## —❀ षड्विध तात्पर्यलिङ्ग समन्वयः। ❀—

ननु । यद्यपि भवता निषदां शिवाद्वैतपरत्वं प्रतिपादित न्तथापि तासु षड्विधानामपि तात्पर्यलिङ्गानां केवलाद्वैतसाधकतया निषदां केवलाद्वैतपरत्व मवार्य मितिचेत् उच्यते । नहि सर्वास्वपि निषत्सु षड्विधान्यपि तात्पर्यलिङ्गानि नियमेन विद्यन्ते तत्रतत्र विद्यमानानिच तानि शिवाद्वैतसाधकान्येव ॥तथाच , ईशावास्योपनिषत् , ईशावास्यमिति शिवासाधारणाभिधानश्रुतिविभूषणे नोपक्रमेण जगदीशयो र्नियम्यनियाम-मकतया शरीरशरीरिभाव मुपपादयन्ती शिवाद्वैतमेव राद्धान्तयति ।

एवं केनोपनिषदपि—श्रु ॥ केनेषितमिति शिवासाधारणधीप्रेरकत्व लिङ्गघटिते नोपक्रमेण , तद्ध तद्वनमिति परमेश्वरासाधारणसार्वात्म्यलिङ्ग घटितेनोपसंहारेण । ब्रह्महि देवेभ्योविजिग्यइति ब्रह्मसगुणत्वव्यवस्थापके नार्थवादेनच शिवाद्वैतमेव राद्धान्तयन्ती केवलाद्वैतं प्रतिक्षिपतीति व्यक्तम् ।

तथा कठोपनिषच्च । श्रु ॥ येयम्प्रेतइति मुक्तजीवविषयोपक्रमेण । अगुष्टमात्रः पुरुषो ऽन्तरात्मा सदाजनानां हृदयेसन्निविष्टइति सर्वान्तर्यामित्वप्रतिपादनपरे णोपसंहारेणच । ऋत म्पिबन्तौ । नित्योनित्यानां चेतनश्चेतनानामिति जीवेश्वरभेदप्रतिपादकेना ऽभ्यासेनच । त चेपदं संग्रहेणब्रवीमी त्यपूर्वतया । नचिकेतो मरण म्मानुप्राक्षीरित्यर्थवादेन । दृश्यते त्वग्रयया बुध्या इत्युपपत्त्या । अध्यात्मयोगाधिगमेन देव म्मत्वा धीरो हर्षशोकौ जहातीति फलेनच सविशेषशिवाद्वैत मेव सिद्धान्तयति । नच, प्रकृते फलं केवलाद्वैतसाधरणमिति शंक्यम् । उपक्रमादीनां केवलाद्वैतप्रतिकूलतया फलस्यापि तदानुगुण्यान्यथानुपपत्त्या शिवाद्वैत साधकत्वावश्यम्भावात् ॥

एवं प्रश्नोपनिषदपि । श्रु ॥ इमाः प्रजाः प्रजायन्तइति सृष्टि याथार्थ्यप्रतिपादके नोपक्रमेण । स प्राण मसृजतेत्यादिना तादृशे नैवोपसंहारेण एषहि द्रष्टा स्प्रष्टा विज्ञानात्मा पुरुषः परेऽक्षरे आत्मनि सन्तिष्ठतइति भेदसाधिकयाऽपूर्वतयाच शिवाद्वैतमेव राद्धान्तयति ॥

तथा मुण्डकोपनिषदपि । द्वासुपर्णेत्युपक्रमेण । परमं साम्यमुपैती त्युपसंहारेण तयो रन्यः । अनश्न न्नन्यः । अन्य मीशमितिचाऽभ्यासेन । शास्त्रैकगम्येश्वरप्रतियोगिकस्य भेदस्य शास्त्रविनाऽप्राप्ते स्तद्रूपापूर्वतया पुण्यपापे विधूयेति फलेन । अस्य महिमानमिति श्रुतिरूपार्थवादेन । अत्ती त्यनश्नन्नन्यइति चोपपत्त्याच सविशेषं शिवाद्वैतं राद्धान्तयति ॥

अत्र द्विशब्दो भेदवाचक स्तदाक्षेपकोवा । द्वित्वसंख्यैव केवलैक्यविरोधिनीसुपर्णमो विशिष्टभेदविषयः तद्विलत्वविशेषितमेव तद्गतबहु

धर्मयोगित्व न्तत्साद्दश्यम् । नतुविशेष्यमात्रमि त्युपसंहारोपिसविशेषाभेद विषयएव । अन्य मीश मित्यत्र ईशगतान्यत्व म्प्रतिपश्यतीति प्रकृतो जीवएव पदन्यायेन प्रतियोगितया सम्बध्यतइ त्यभ्यासोपि भेदविषयएव । एवंच उपक्रमादिषड्विधलिङ्गानामपि भेदविषयतया केवलाद्वैतविरोधित्वा देतैर्लिंगै स्सविशेषशिवाद्वैतमेव बोधितमिति दिक् । नन्वेतै र्लिंगैः केवलद्वैतमेव प्रतिपाद्यत इतिचे न्न । श्रु ॥ एकमेवाऽद्वितीयं ब्रह्म शिवएव केवल इत्यादिभि रनन्ताभि श्श्रुतिसूक्तिभि र्विशिष्टशिताद्वैतस्य प्रतिपादितत्वेन प्रकृत एतेषां लिङ्गानां प्रकारगतभेदप्रतिपादनद्वारा शिवाद्वैत परत्वस्यैवसमुचितत्वा दन्यथा अभेदश्रुतिभि र्व्याघातस्य दुरुद्धरत्वा त्तस्मा द्यथोक्तमेव युक्तम् ॥

किंच , केवलभेदपक्षे ब्रह्मणः केवलनिमित्तकारणत्वाभ्युपग मेन । श्रु ॥ अस्मिन्द्यौःपृथिवी चान्तरिक्षं प्रोतम्मन इतिप्रतिपादित सर्वाधारत्व स्यानुपपन्नत्वात् । यथोर्णनाभिस्सृजते गृह्णतेचेति प्रकृतोप निषत्प्रतिपादितस्याऽभिन्ननिमित्तोपादनत्वस्यानुपपत्तेश्च , कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञात म्भवतीति सर्वविज्ञान प्रतिज्ञानुपपत्तेश्च मुण्डकोपनिषद्गतानां षड्विधानामपि तात्पर्यलिङ्गानां सविशेषशिवाद्वैतपरत्व मविचलम् ॥

ननु , प्रथममुण्डके कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञात म्भवतीति शौनक प्रश्नानन्तरम् । द्वेविद्ये वेदितव्यइति विद्याद्वय मवतार्य ऋग्वेदादिलक्षणा मपरा मुक्त्वा । अथ परा यया तदक्षर मधिगम्यते यत्त दद्रेश्य मग्राह्य मगोत्र मवर्ण मित्यादिना परविद्याविषय मक्षरं

प्रश्नानुसारेण प्रतिपादयता अभेदस्यै वोपक्रान्तत्वात् । अन्यथा तदुत्तर त्वानुपपत्तेः । द्वितीयमुण्डके पुरुषएवेदं विश्वमिदं वरिष्ठमिति मध्ये परा मर्शात् । तृतीयमुण्डकेच – परेऽव्यये सर्व एकीभवन्ति । स योहवै तत्परमं ब्रह्मवेद ब्रह्मैव भवती त्यैक्यलक्षणफले नोपसंहाराच्च मुण्डकत्र यात्मिकाया उपनिषद ऐक्यपरत्वे स्थिते । असंयुक्त म्प्रकरणादिति न्याये नाभिक्रमणादिव न्मध्यस्थितवाक्यस्यापि द्वासुपर्णेत्यादे स्तदनुकूलत्वे सम्भवति महाप्रकरणविरोधेन विपरीततात्पर्य कल्पनया भेदोपक्रम-त्वाभावात्। परमं साम्य मुपैतीत्यस्य पूर्वोक्तन्याये नैक्यपरतया भेदोपसंहार त्वाभावात् ॥ अत. अनश्नन्नित्यादिना न तात्विकभेदाभ्यासः । नापी शस्य शास्त्रगम्यतया तत्प्रतियोगिक स्तद्धर्मिकोवा भेदो ऽ पूर्वः । ईशज्ञान मात्रे तदपेक्षायानपि प्रत्यक्षेण तत्समकक्ष्यमानेनच तयोः प्राप्तत्वात्। त्वदुक्तफलार्थवादयो रैक्यपक्षेपि सम्भवेन नभेदासाधारणलिङ्गता अनश्नन्नित्यादेः काल्पनिकभेदेनो पपत्त्या तात्त्विकभेदोपपत्तित्वाभावादि त्यद्वैतसिद्धिकारै र्निगदितमितिचेत्त दविचारसहम् । सर्वविज्ञानप्रति-ज्ञाया विशिष्टाभेदसाधारणत्वात् । यया तदक्षर मधिगम्यतइति ब्रह्मणः प्राप्यत्वाम्नानस्य भेदसाधकत्वेन उपक्रमस्य केवलाद्वैतपरिपन्थित्वात् । यत्त दद्रेश्यमित्यादि सूक्तेरपि सू ॥ अदृश्यत्वादिगुणको धर्मोक्ते रित्या चार्येण सगुणत्वसाधकतावधारणेन केवलाद्वैतविरुद्धत्वात् । परेऽव्यये सर्व एकीभवन्तीति वचनस्यापि ब्रह्मण स्सुषुप्तिलयाधारत्वमात्रबोधकत्वेन सू ॥ सुषुप्त्युत्क्रा न्त्यो र्भेदेनेति सूत्रकृता भेदपरत्वनिर्धारणेन तेना त्यैक्यासिद्धेः । साम्य मुपैतीत्यादिवचनानुरोधेन ब्रह्मवि द्ब्रह्मैवभवतीति

वचनगतैवकार स्येवार्थकतया उपसंहारस्यैक्यसाधकत्वाभावात् श्रुत्यवग तभेदस्य काल्पनिकत्वपरतया तात्त्विकत्वानभ्युपगमस्य श्रुतिप्रामाण्यानभ्यु पगमरूपत्वाच्च । तस्मा न्मुण्डकोपनिषत् षड्विधैरपि तात्पर्यलिङ्गै स्सविशेषशिवाद्वैतमेव निर्धारयतीति दिक् ॥

तथा, माण्डूक्योपनिषदपि सर्वंह्येतद्ब्रह्मे त्युपक्रमेण शिव मद्वैतं चतुर्थम्मन्यन्त इत्युपसंहारेणच शिवाद्वैतमे वावगमयति ॥

एवन्तैत्तिरीया ब्रह्मवल्लीच । ब्रह्मवि दाप्नोति परमिति प्राप्तृ–प्राप्तव्यतया जीवेश्वरयो र्भेदसाधके नोपक्रमेण । स यश्चाऽय म्पुरुषे यश्चासा वादित्ये सएकइतीश्वरनानात्वनिषेधके नोप संहारेण भीषास्मा द्वातः पवतइतिनियन्तृत्वबोधके नार्थवादेन । सोऽश्नुते सर्वान्कामानिति सगुणब्रह्मसायुज्यफलेनच सविशेष शिवाद्वैतमेव राद्धान्तयति ॥ तथा भृ–गुवल्लीच। यतोवा इमानि भूतानि जायन्तइति सृष्टे स्तात्त्विकत्वप्रतिपा–दनपरे णोपक्रमेण । अन्योऽन्तर आत्मानन्दमयइति जीवेशयो श्शरीर-शरीरिभावबोधके नोपसंहारेणच शिवाद्वैतमेव बोधयति ॥

एवं श्वेताश्वतरोपनिषदपि किंकारणम्ब्रह्मेति कारणतया ब्रह्मण स्सगुणत्वव्यवस्थापके नोपक्रमेण । यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा शिव मविज्ञाय दुःखस्यान्तो भविष्यतीतरनिषेधमुखेन शिवोपासनस्यैव मोक्षसाधनत्वनिर्धारणपरे णोपसंहारेण । मायान्तु प्रकृतिं विद्या न्मायिनन्तु महेश्वरं शिवएवकेवलः । इत्यादिना चिदचि-दाकारपरमशक्तिविशिष्टत्वबोधकेन । ज्ञाज्ञौद्वा वजावीशानीशौ । अनीश श्चात्मा इत्यादिना आत्मेश्वरभेदप्रतिपादनपरे णाभ्यासेन ।तिलेषु तैलं

न्दधिनीव सर्पिरिति केवलाद्वैतवादासंगत परमेश्वरजीवनिष्ठत्व साधिक योपपत्त्या । ब्रह्मवादिनो वदन्तीत्यर्थवादेन । त मात्मस्थं येनुपश्यन्ति धीरास्तेषां शान्तिरिति स्वान्तर्यामितया ब्रह्मानुसन्धानशालिमात्रलभ्येन फलेन । हर शिवे शेश्वर महेश्व रादि शिवासाधार णानेकाभिधान श्रुतिभिश्च सविशेषशिवाद्वैतमेव राद्धान्तयति ॥

एवं छान्दोग्योपनिषदपि षड्विधैरपि तात्पर्यलिंगै शिवाद्वैतमेव बोधयति । तथाच , उपक्रमेतावत् - उत तमादेश मप्राक्ष्य इत्यादेश शब्देन ब्रह्माभिदधती तदीयं निरुपाधिकप्रशासनगुणंनिवेदयति । तथा येनाश्रुतं श्रुतंभवतीत्यनेन जगदुपादानत्व न्तदनुगुणसर्वज्ञत्वसर्वशक्तिमत्वा दिक ञ्चावगमयति । तत उपसंहारेच तत्त्वमसीति सामानाधिकरण्येन ब्रह्मणो जीवान्तर्यामित्वं निवेदयति । अस्यैवार्थऽ स्यावर्तितत्वा दभ्यास स्सम्प द्यते । एव मत्र प्रतिपाद्यमानानां जगत्कारणत्वादिब्रह्मगुणानां प्रमाणा न्तराप्राप्तत्वा दपूर्वता सिद्धा । एव मुपासकस्य “ तस्यताव देव चिरं यावन्नविमोक्ष्ये ऽथ सम्पत्स्यइति मोक्षश्रवणा त्फलमपि सिद्धम् । पितुः पुत्रम्प्रति प्रतिवचनरूपत्वा दर्थवाद स्समुचितः । मृत्पिण्डादिदृष्टान्तोप पादना दुपपत्तिश्च सिद्धा । अत्र दृष्टान्तत्रयेपि विवर्तपक्षानुगुणः कोपि नदृश्यतेदृष्टांन्तः । अपितु परिणामपक्षानुगुणएव मृद्घटादि दृश्यते । दार्ष्टान्तिकविषयवाक्येपि तत्तेजोऽसृजते त्येवश्रूयते । नतु तदभ्रमदिति । यथा श्रुत्यन्तरेषु श्रूयते तदात्मानम् स्वयमकुरुतेति नतु व्यवर्ततेति । यथाच सूच्यते सूत्रेण परिणामादित्येव नतु विवर्तादिति । एव मत्रापि विवर्तपक्षानुगुणप्रसङ्गवर्ज म्परिणामपक्षप्रतिष्ठापनाच्च सविशेष शिवाद्वैतएवाऽस्य परमतात्पर्य मिति विज्ञायते ।

नच, केवलभेदवादस्यापि विद्यन्ते साधकानीति शंक्यम् । तादृशानां केषांचि दुपलम्भेपि तेषामान्तर्गणिकभेदप्रतिपादनद्वारा विशिष्ट शिवाद्वैतोपपादनपरत्वात् । अन्यथा प्रतिज्ञादृष्टान्तविरोधस्य ऐतदात्म्य मिदग्ं सर्वमिति परमेश्वरसार्वात्म्यविरोधस्यच दुरुद्धरत्वा त्केवलभेदो नप्रकृतोपनिषद्विषयइति दिक् ॥

नन्वत्र तत्त्वमसीति नवकृत्वो जीवपरयो रभेदोपदेशे नेयं केवलाद्वैतसाधिकेतिचे न्नसारमेतत् । नवस्व प्येकस्यामपि खण्डिकाया न्दृष्टान्तदार्ष्टान्तिकयो रभेदस्यानिरूपणात् । प्रत्युत बह्वीषु भेदस्यैव निरूपणाच्च । तथहि, प्रथमखण्डे, सयथा शकुनि स्सूत्रेण प्रबद्ध इत्युक्तयो श्शकुनिसूत्रयो रैक्यं नोपलभ्यते । एव न्द्वितीयखण्डेपि नाना-त्ययानां वृक्षाणां रसानित्युक्तानां नानावृक्षरसानां नैक्यं सम्भवति । नहि नानावृक्षरसा अन्योन्यभेदत्यागेन प्राक्सिद्धेन मधुना ऐक्य मापद्यन्ते । नवा प्राक् भेदभ्रान्तिविषयाः पश्चात्तदविषयाः किन्तु तन्तव इव पट मन्योन्यभिन्नाएव प्रागसिद्ध म्मधूत्पादयन्ति । तथा तृतीयखण्डेपि निगदितयो र्नदीसमुद्रयो र्नैक्यं वक्तुं शक्यम् । अत्र यद्यपि जलत्वसामान्या दभेदो वक्तुं शक्यते । तथापि । सति सम्पद्य नविदु स्सति सम्पत्स्याम हइति दार्ष्टान्तिके भेदोक्त्या दृष्टान्ते ऽ भेदो न विवक्षित इत्येव विज्ञायते । एवंचतुर्थेचास्य यदेकां शाखां जीवो जहातीत्यादिना अन्व-यव्यतिरेकोक्त्या । अष्टमेच पुरुषं सोम्योपतापिन मित्यादिना स्वातन्त्र्य शंकानास्पदमरणनिदर्शनेन ईश्वराधीनत्वस्योक्तत्वात् । तथा षष्ठे लवण मेत दुदक इत्यादिनोक्तयो र्लवणोदकयोः । सप्तमे पुरुषं सोम्य गन्धा-रेभ्य इत्यादिनोक्तयोः पुरुषगन्धारदेशयोः । नवमेच , अपहार्षीत् स्तेय

मकार्षिदित्यादि नोक्तयोः स्तेनापहार्ययो रैक्यं विद्यते। तस्मात्केवला द्वैतवादो नप्रकृतश्रुतितात्पर्यविषय इतियुक्तं॥

किञ्च! तत्वमसीत्यत्र त्वन्तदसीत्यर्थस्य वक्तृश्रोतृतात्पर्यविरुद्ध त्वाच्च। तथाच, भूयो माभगवा न्विज्ञापयत्विति वाक्यस्य परमेश्वरसांग- त्याज्ञानविषय प्रश्न परत्वेनैव। यथामधुकृतइतिवाक्यस्य तदुपपादकोत्तर परत्वेनैवच परै रपि विवृतत्वेन। तत्त्वमसीतिवाक्यस्य स्वस्य परमेश्वरा- भेदबोधकत्वे नहि, प्रजाःपरमेश्वरं संगम्य वयं परमेश्वरं संगताइति कथं न विदुरिति प्रश्नस्य तदुपपादकस्योत्तरस्य चोपपत्ति स्सम्भवति। यथा यःकोपि भवान्राजेति बोधितः स्वयमेव राजासन् राजानं कथ ममात्या सेवेरन्निति पृच्छ न्नहासभाजनं भवेत्॥

नच स्वस्य ब्रह्मत्वं श्रुतमेव नतु मननंनिदिध्यासनाभ्या मपरोक्षीकृ तम्। ततः प्रश्न स्संगच्छतइति शंक्यम्। एवमपि स्वेन तदभेदस्यैव गृही तत्वेन भेदविषयप्रश्नासांगत्यावारणात्। वक्त र्यपरोक्षब्रह्मानुभवस्य निश्शंकतया परमेश्वरसंगतप्रजाविषयाज्ञानोपपादनपरतया भेदसमर्पकोत्तर- वाक्य स्याभेदपरिपन्थित्वानपायाच्च। एवंच, प्रकृतखण्डगतप्रश्नोत्तर वाक्यान्यथानुपपत्त्या तत्त्वमसीतिवाक्यस्य तदभेदपरत्वाविवरणं भ्रान्ति निबन्धनमेवे त्यलम्बहुना॥

यत्त्वत्र। स्वप्नान्तमित्यादे स्सुषुप्त्यवस्थायामेव जीवत्व- विनिर्मुक्तं स्व न्देवतारूप न्दर्शयिष्यामी त्यनेना ऽभिप्रायेण उद्दालके नावतारितत्वे नेश्वराधीनत्वपरत्वाभावात्। जला दुत्थितानांवीचीतरङ्गानां विनाशो दृष्टः। जीवाना म्प्रत्यहं स्वरूप ङ्गच्छता म्मरणप्रळययोश्च नाशा भावः कथमि त्याशङ्काया स्तत्परिहारत्वे नोक्तस्य वृक्षशाखानिदर्शनस्य

जीवाधिष्ठितंशरीरं जीवति तदपेतंच म्रियतइत्येतत्परत्वात्। जीवापेतं वावकिलेदम्म्रियते नजीवो म्रियत इति वाक्यशेषात् । यथा सोम्योपतापिन मित्यस्यापि " आचार्यवा न्विद्वा न्केन क्रमेण सत्सपद्यतइ त्याशंकाया न्तत्क्रम दर्शनपरत्वेन ईश्वराधीनत्वे तात्पर्याभावादि त्यद्वैतसिद्धिकारै रुक्त न्तद सङ्गतम् । स्वप्नान्तमित्यादेः ॥श्रु॥ यथा अस्मिन्नाकाशे श्येनोवा सुपर्णोवा विपरिपत्य श्रान्तस्संहत्य संलयायैवध्रियते एवमेवायं पुरुषइति|सुषुप्तिसमये श्रुत्यन्तरेपि भिन्नश्येननीडदृष्टान्तोक्तेः प्रकृतेपि सयथा शकुनि स्सूत्रेण प्रबद्ध इति भिन्नश्येनसूत्रदृष्टान्तोक्तेः । प्राज्ञेनात्मना सम्परिष्वक्तइति सुषुप्तिसमये भेदोपपादकश्रुत्यन्तरात् सू ॥ सुषुप्त्युत्क्रान्त्यो र्भेदेनेति सूत्राच्च जागरणइव सुषुप्तावपि जीवब्रह्मणो र्भेदावगमेन स्वमपीतइत्यत्रत्यस्वशब्द स्यात्मीय वाचितया सुषुप्त्यवस्थाया मीश्वरप्रासिन्दर्शयिष्यामीत्यर्थस्यैव सिद्ध्या ईश्वराधीनत्वपरत्वानपायात् । जीवाना म्प्रत्यह मीश्वरङ्गच्छता म्मरणप्रळययोश्च विनाशाभावप्रतिपादकत्वेपि सुषुप्त्यादिषु सर्वास्व प्यवस्थासु श्रुत्यन्तरानुरोधेन परमेश्वराधीनत्वावगमेन तदर्थानपायात् । कुत्रापि दृष्टान्तवाक्ये जीवब्रह्माभेदस्याऽ सूचितत्वात् । सर्वत्रापि शकुनिसूत्रादिदृष्टान्तानां सति सम्पद्य नविदु स्सतिसम्पद्यामहइति दार्ष्टान्तिकस्यच भेदघटितत्वोक्त्या केवलाद्वैते सर्वासाङ्गत्य-तादवस्थ्यात् ॥

नच , स्पष्टभेदाभावाभिप्रायेण दृष्टान्ताना मुपात्तत्वेन त्वदुक्तदूषणगणाना मगणनीयत्वादि त्यद्वैतसिद्धिका रै रुक्त मितिशंक्यम् स्पष्टभेदाभावे विवक्षिते प्यस्पष्टस्य भेदस्यैवसिद्धे रभेदस्य साधकानुपलम्भे नासिद्धत्वात् ॥

ननु । सति सम्पद्य नविदु स्सतिसम्पत्स्यामह इत्यस्य स्व-मपीतोभवती त्येकवाक्यतया स्वाभिन्नेसति सम्पत्स्यामह इत्यर्थात् । उक्त स्वरूपभेदाभावाज्ञानोक्त्या उक्तस्वरूपात्मकविशेषणाज्ञानस्यैव विवक्षितत्वात् । वस्तुत स्सतिसम्पद्य नविदुस्सति सम्पत्स्यामहइत्यस्य सुषुप्तिकालीनोक्तभेदाभावरूपसम्पत्तिम्प्राप्यापि सति ब्रह्मणि सम्पद्यामह अभिन्नावयमिति नविदु रह म्ब्रह्मेति नविदुरित्यर्थः । परंज्योति रुपसम्पद्येत्यत्रैक्येपि सम्पदेः प्रयोगात् । अतएव हिरण्यनिधि मित्यादौ सर्वाः प्रजाः अहरहर्गच्छन्त्योपि ब्रह्मलोकं नविन्दन्ति अनृतेनहि प्रत्यूढाइत्यत्र स्फुटोय मर्थइति ब्रह्मानन्दीये प्रसाधितमितिचे तदपि सिकतातैलसाधन सदृक्षमेव पूर्वोक्तश्रुतिसूत्रानुरोधेन स्व मपीत इत्यत्रत्यस्वशब्द स्यात्मीय वाचितया तदेकवाक्यतयापि स्वाभिन्ने सतीत्यर्थस्य दुराशास्पदत्वात् ।

वस्तुतस्तु , स्वमपीतइत्यत्र स्वशब्दस्यात्मपरत्वग्रहणं भ्रान्तिनिबन्धनमेव । तथाहि – स्वमपीतइतिवाक्यस्य " यत्रैत त्पुरुष स्स्वपितिनाम सतासोम्य तदासम्पन्नोभवती त्युपक्रमगतसत्स-म्पत्तिपर वाक्यविवरणरूपत्वेन तदनुरोधेन स्वपदस्य स्वीयपरमात्मपरत्वा-वश्यम्भावे नात्मीयवाचित्वानतिवृत्तेः । अन्यथा – स्वेन तदासम्पन्नो भवति स्वस्मिन्सम्पद्य नविदु स्स्वस्मि न्सम्पद्यामहइतिचैव वक्तव्यतया " सतासोम्यतदा सम्पन्नोभवति सतिसम्पद्य नविदुः सतिसम्पद्यामहइति च पूर्वोत्तरवाक्ये नोपपद्येयाताम् । एवंच - पूर्वोत्तरवाक्यान्यथानुपपत्त्यो । स्वपद स्यात्मीयपरत्वावश्यम्भावात् । हिरण्यनिधिदृष्टान्तेपि भेदस्यैव स्फुटतरत्वेन तस्या प्यभेदबाधकत्वात् । सम्पदेः प्राप्त्यर्थकत्वेन त स्यैक्यरूपार्थ स्यानर्थत्वा नपायाच्च ।

एवञ्च , एकमेवाऽद्वितीयमि त्यभिन्ननिमित्तोपादानत्वप्रति-पादनात् । सदेवसोम्येद मग्र आसीदिति परमेश्वरसर्वात्मत्वोपक्रमात् । एतदात्म्यमिदग्ं सर्वमिति पारमेश्वरसार्वात्म्येनोपसंहारात् । स आत्मा तत्त्वमसीति परमेश्वरात्मकत्वस्य नवकृत्वोऽभ्यासात् । शास्त्रं विना शास्त्रैकगम्य स्येश्वरात्मकत्व स्याप्राप्ते रपूर्वत्वात् । अथ सम्पत्स्यइति फलश्रवणात् । येनाश्रुतं श्रुतम्भवती त्यर्थवादात् शकुनिसूत्रादिदृष्टान्तै रीश्वराधीनत्व स्योपपादनाच्च षड्विधानामपि तात्पर्यलिङ्गानां सविशेष शिवाद्वैतप्रतिष्ठापनपरत्वा द्यथोक्तमेव युक्तमि त्यलम् ।

तथा । बृहदारण्यकोपनिषदपि अन्तर्यामिब्राह्मणप्रकटितनिज हृदया षड्विधैरपि तात्पर्यलिङ्गै स्सविशेषशिवाद्वैतमेव राद्धान्तयति । अन्तर्यामिब्राह्मणन्तु शिवाद्वैतपरमि त्यकामेना प्यवश्य मेष्टव्यम् । तथाहि, वेत्थ नुत्वं काप्य त मन्तर्यामिणमित्युपक्रमः । एषत आत्मान्तर्याम्यमृत इत्युपसंहारः । एषत आत्मेत्याद्येकविंशतिकृत्वो ऽ भ्यासः । अन्तर्यामि त्वस्या ऽ प्राप्ततया ऽ पूर्वता । सवै ब्रह्मवि दित्यादि फलम् । तच्चेत्वं याज्ञवल्क्य सूत्र मविद्वां स्तञ्चा ऽ न्तर्यामिण म्ब्रह्म गवीरुदजसे मूर्धा ते निपतिष्यतीति निन्दारूपो ऽ र्थवादः । यस्य पृथिवी शरीरं । यम्पृथिवी नवेदे त्याद्युपपत्ति रितिषण्णामति तात्पर्यलिङ्गानां जीवपरयो श्शरीर शरीरिभावरूपतात्पर्यनिर्णायकत्वात् ॥

ननु । बृहदारण्यकेपि आत्मेत्येवोपासीतेति सूत्रितब्रह्मविद्यारूपाया श्चतुरध्याय्याम् । अनेन ह्येतत्सर्ववेदेति एकविज्ञानेन सर्वविज्ञानप्रतिज्ञापूर्वकं

ब्रह्मवा इदमग्रआसी त्तदात्मानमेवाऽवे दहम्ब्रह्मास्मीति तस्मा त्तत्सर्व मभव दित्यभेदे नोपक्रम्य षष्ठाध्ययान्ते मैत्रेयीब्राह्मणे निगमनरूपे "यत्रत्व- स्य सर्वमात्मैवाऽभू त्तत्केन क म्पश्येदित्यादिनाऽभेदेन वोपसंहारात्। अध्यायचतुष्टयस्या प्यभेदपरत्वे स्थिते तदन्तर्गतस्य ब्रह्मलोकान्तरसूत्रा- त्मप्रतिपादनपरस्य उत्तरब्राह्मणप्रतिपाद्यनिरुपाधिकसर्वान्तरब्रह्मप्रतिपत्त्यनु कूलस्य महाप्रकरणानुरोधेन तद्विरोधिभेदपरत्वाभावात्॥

अतएव, नशारीर श्चोभयेपिहि भेदेनैन मधीयतइति सूत्र विरोधः। नवा तद्भाष्यव्याहति रित्यद्वैतसिद्धिकारै रुक्त मितिचेत्। तदसारम्। आत्मेत्येवोपासीतेत्युपक्रमस्य उपासनाविधायकतयाऽस्मदनु कूलत्वेन परेषा मसाधकत्वात्। परै रसाधकत योदाहृतसूक्तीनां बृहदा रण्यकविचारे तदसाधकत्व स्योपपादितत्वात्। चतुर्थाध्याये प्रथमब्राह्मणे सू॥ सुषुप्त्युत्क्रान्त्योर्भेदेनेति सूत्रनिर्णीतजीवपरभेदप्रतिपादकात्। "यएषोन्त र्हृदय आकाशस्तस्मिञ्छेत इति ब्रह्मण स्सुषुप्तिकाल जीवाधिष्ठानत्वश्रवणात्। पंचमाध्याये अष्टमब्राह्मणे एतस्यवा अक्षरस्य प्रशाशने गार्गि सूर्याचन्द्रमसौविधृतौतिष्ठतइति प्रशासनगुणोपपादनात्। अष्टमब्राह्मणे तेऽर्चिष मभिसम्भवन्तीत्यादिना सविशेषब्रह्मपरत्वेन सर्व सम्मतार्चिरादिगत्युपसंहाराच्च षड्विधानामपि तात्पर्यलिङ्गानां प्रकृतो पनिषद्गतानां सविशेषशिवाद्वैतपरत्वावश्यम्भावेन अन्तर्यामिब्राह्मणस्यवा तदलंकृतस्य बृहदारण्यकस्यवा परेषां स्वायत्तीकरणदुराशाया हासावहत्व द्योतनात्॥

अतएव, अद्वैतशास्त्रसिद्धान्तलेशसंग्रहे -- जीवेश्वरस्वरूपनिरू पणे, बिंबभूतस्य विकारान्तरावस्थानायोगा दीश्वरेऽन्तर्यामिब्राह्मणाज्ञ

स्याभाव स्तुल्यइति प्रतिबिंबावच्छिन्नपक्षयो रुभयोर प्यन्तर्यामि ब्राह्मणस्य स्वमतेऽसाङ्गत्य न्नित्यमि त्यावेदितम् ॥

ननु , श्रीविद्यारण्यैः चित्रदीपे - जीव ईशो विशुद्धाचिदिति त्रैविध्यप्रक्रियां विहाय चितश्चातुर्विध्यपरिकल्पनेन स्वमतेऽन्तर्यामि ब्राह्मणं सुसङ्गतीकृतमितिचेत् । अशिरस्कशिखाकल्पन मेतत् । कैश्चि त्रैविध्ये नान्यै श्चातुर्विध्येनच परिकल्पितुं चित स्तूलतुल्यत्वाभावात् । जीव ईशइति चितो द्वैविध्यमेव यथार्थ मनभ्युपगच्छतां परेषां चातुर्विध्या श्रयणेन स्वमतप्रसिद्धपण्डिताङ्गीकृतान्योन्यविरुद्धैवंविधविविधकल्पनाभिश्च स्वमते युक्तिमात्रमूलत्वस्य श्रुतिविरोधस्यच सुप्रतिष्ठितत्वाच्च ॥

एवंच , षड्विधतात्पर्यलिङ्गवतीभि स्सर्वाभि रप्युपनिषद्भि स्सविशेषशिवाद्वैतमेव राद्धान्तितमिति युक्तम् । तस्मात् सर्वोपनिष द्विरुद्धइति संसिद्ध स्त्वदीयोमत इतिसंग्रहश्लोकोक्तं साधीयइति सर्व मनवद्यम् । एतेन यत् आनन्दमयाधिकरणभामत्यां , सूत्राणित्वेवंव्या ख्येयानीति भाष्यप्रतीक मुपादाय । वेदसूत्रयो र्विरोधे गुणे त्वन्याय्य कल्पना । इति सूत्रा ण्यन्यथा नेतव्यानीति वचनेन वैयासिकसूत्राणां शांकरभाष्यकृतविपरीतान्वयस्य सूत्रगतवेदविरोधमूलत्वं स्वपक्षगत वेदानुसारित्वंचा ऽभिमानितं न्तदनवशेषमुत्सादितमिति व्यासपथे निगमान्तार्थनिष्कर्षेच सर्वं सविस्तर मुपपादितमित्यलम्बहुना॥

लिङ्गाम्बाप्राणनाथेन नागलिङ्गेन निर्मिते ।
सव्यभागे वेदपथे भव्ये ब्रह्मपथङ्गते ॥
केवलाद्वैतमार्गस्य प्रतिपथ इतीरितः ॥

—* शिवम्भूयात् ॥ *—

## साध्वसाधु पत्रिका।

| पृष्ठ | पंक्ति | असाधु | साधु |
|---|---|---|---|
| २४ | १६ | दर्ध | दर्थ |
| ३७ | ८ | श्रयते | श्रूयते |
| ,, | १९ | नियतवर्णपद | नियताष्टनवाक्षर |
| ४० | १ | शृति | श्रुति |
| ,, | ३ | मान्ता | मान्तार्थ |
| ४२ | ११ | तीय | तृतीय |
| ,, | १२ | ब्रहृण | ब्रह्मण |
| ४३ | १९ | रधं | रथं |
| ४४ | १५ | णाग्ह | णाह |
| ,, | २० | स्सभूय | स्सम्भूय |
| ४५ | १४ | मांचमतन्नि | नांचमतंनि |
| ५६ | १ | षुत्रेण | पुत्रेण |
| ,, | ५ | जानाति | नजानाति |
| ५९ | ४ | ततान्य | ततोन्य |
| ६० | १ | दत्या | दित्या |
| ६८ | २० | दर्शनेन | दर्शने |
| ७२ | २० | आय | अय |
| ७६ | १ | वंश | विंश |
| ७७ | २ | अगुष्ठ | अंगुष्ठ |

| पृष्ठ | पंक्ति | असाधु | साधु |
|---|---|---|---|
| ७८ | ७ | शिता | शिवा |
| ८२ | १६ | पत्स्या | पद्या |
| ८३ | ९ | सेवे | स्सेवे |
| ,, | १६ | परत्वा | परत्व |
| ८४ | २ | मियत | म्रियत |
| ८५ | १ | पत्स्या | पद्या |
| ,, | ४ | पत्स्या | पद्या |
| ८६ | ३ | एत | ऐत |
| ,, | १७ | मति | मपि |
| ,, | २० | चतुरि | चतुर |

